जानवारी १९४१.



॥ श्रीशः शरणम् ॥

# मधुरवाणी.

७ वर्षस्य ] १८६३ शके [ ३ अङ्कः



सम्पादकः
गलगली रामाचार्यः
संस्कृतसाहित्यरत्नम्

सहसम्पादकः
बुर्ली श्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

# अनुक्रमणिका.


| क्रमांकः | विषयाः | लेखकाः | पृष्ठाङ्कः |
|---|---|---|---|
| १ | मङ्गलम् | अनिर्दिष्टनामा | ७९ |
| २ | द्वितीय सं. सा. सम्मेलनम् | सम्पादकः | ८० |
| ३ | अभिनन्दनम् | सम्पादकः | ८१ |
| ४ | प्रसन्नहनुमन्नाटकम् | पं. विश्वेश्वरदयालु शर्माइटावा | ८३ |
| ५ | वृद्धनिर्वेदः | पं. क. वे. कृष्णमूर्तिशास्त्री प्राच्यविद्यासंशोधनमन्दिरं पूना | ८७ |
| ६ | संस्कृतप्रचारकविद्यालयः मोहमयी | पं. रामजीपाण्डेयशास्त्री | ८९ |
| ७ | महाकविः कालिदासः | प्रो. के. ना. वाटवे पुणे | ९३ |
| ८ | संस्कृताध्यापनपद्धतौ विद्वन्मतानि | प्रो. हुपरीकरगणेशशर्मा कोल्हापूर | ९५ |
| ९ | इन्दुमतीस्वयंवरः | कुलकर्णी आर. एच्. विद्यार्थी बेळगांव | १०३ |
| १० | राष्ट्रगीतम् | पं. रानडेशास्त्री पुणे | १०६ |
| ११ | सं. सं. सभातृतीयवार्षिकोत्सवः | शंकरशास्त्रीमोहोलकरः | १०७ |
| १२ | प्राप्तिः परामर्शश्च | स. सम्पादकः | १०८ |
| १३ | गंगावर्णनम् | पं. तर्कतीर्थनीलकण्ठशिवाचार्याः सवदत्ती | १०९ |
| १४ | संस्कृतमाहात्म्यम् | पं. शिवरामशास्त्रीशिंत्रे मुंबई. | ,, |

श्रीशः शरणम्




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

७ वर्षे ]   १८६३ शाक पौषमासस्य   [ ३ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## मङ्गलम्

( कविः—अनिर्दिष्टनामा )

पूतनोरसि खेलन्तं श्रीकृष्णं मेनिरे जनाः ।
तत्कण्ठगतहारस्थनीलरत्नमणिं क्षणम् ॥ १ ॥

उद्धपिकायाः कुचकुम्भवर्तिनं यं कस्तुरीकर्दममित्यमंसत ।
तं कान्तकृष्णं दयितं व्रजश्रियां विज्ञाय सर्वे दधिरे ससम्भ्रमम् ॥ २ ॥

काञ्चनाद्रिशिखरस्थितमेनं पश्य नीलजलदं न्विति चोक्त्वा ।
पूतनास्तनगतं तमवेत्य नन्दनन्दनमकम्पत गोपी ॥ ३ ॥

# द्वितीयसंस्कृतसाहित्यसम्मेलनम् ।

अव्यवहितपूर्ववत्सरे दक्षिणभारते, सङ्ख्यया प्रथमतया गुणतश्चाद्वितीयतया यशस्वितया च बेलग्राम ( बेळगांव ) नगरे निर्वृत्तं संस्कृतसाहित्यसम्मेलनं जानन्त्येव सर्वे संस्कृतप्रणयिनः । इदंप्रथमतया कथं यशस्वि स्यादिति भयोद्विग्नाः संस्कृतैकप्राणाः संस्थापकाः जनसम्मर्देन विविधाकर्षककार्यकलापैश्च यस्य परमां समृद्धिं समीक्ष्य प्रमोदभरेणानृत्यन् । तस्यैव संस्कृतसाहित्यसम्मेलनस्य द्वितीयमधिवेशनमास्मिन् वर्षे पुण्यपत्तने फेब्रुवरीमासस्य १४-१५ दिनाङ्कयोर्निर्वत्स्यते इति निवेदयितुं नितरां प्रमोदते नश्चेतः । द्वितीयमप्यधिवेशनं सर्वथा अद्वितीयमेव सम्पत्स्यते इत्यत्र नास्ति नः स्तोकोऽपि सन्देहः। यत् पण्डितप्रकाण्डाः श्रीराजेश्वरशास्त्रिणो यत्र अध्यक्षपदमलङ्करिष्यन्ति, महामहोपाध्याया ' अभिनवपतञ्जलि ' पदव्यर्हा ज्ञानवयोवृद्धाश्च अभ्यङ्करवासुदेवशास्त्रिणः स्वागताध्यक्षपदमधिरोक्ष्यन्ति, महाराष्ट्रसाहित्यसम्राट्पदभाजः परिचितसर्वविषयाः देशे विदेशेऽपि विश्रुतयशसश्च श्रीनरसिंह. चिन्तामणकेळकरमहाभागा यत्र कार्याध्यक्षपदमङ्गीकृतवन्तः, विद्वद्वरा यशोनिरपेक्षमेव सुरवाणीसेवायां सततं बद्धपरिकराः रानडे श्रीपुरुषोत्तमशास्त्रिणस्तथा संस्कृतवाङ्मयवाचस्पतयः श्रीवाटवेमहाशयाश्चान्ये माननीयाः कार्यकारिमण्डलमलङ्कुर्वन्ति । ' एकैकमप्यभीष्टाप्त्यै किमु यत्र चतुष्टयम् ' ।

अतः सर्वे संस्कृतज्ञा विद्वांसः स्वयमुपस्थाय चर्चासु गृहीतभागाः स्वियमाशयं विशदमाविष्कुर्वन्तु । येन संस्कृतभाषा त्वरितगत्या सर्वत्र अनिर्बन्धं प्रसारमियात्, तथा प्राप्नुयाच्च राष्ट्रभाषात्वम् । ये हि कार्यान्तरबाहुल्येन सम्मेलने समुपस्थातुं न शक्नुवीरन्, ते स्वाभिप्रायगर्भान् लेखान् प्रेषयन्तु । तेभ्योऽवश्यमवकाशं दास्यति सादरं मधुरवाणी । अन्ये च संस्कृतप्रणयिनः सर्वे प्रत्येकग्रामतः प्रत्येकनगरतश्च सम्मेलनाय पुण्यपुरमुपेत्य स्वीयमसाधारणं प्रणयमाविष्कुर्युरिति साग्रहमभ्यर्थयामः । प्रान्तभाषीयसाहित्यसम्मेलनतः कयाऽपि वा रीत्या किञ्चिदंशतोऽपि संस्कृतसाहित्यसम्मेलनस्य यथा न्यूनता न परिदृश्येत तथा प्रयतितव्यं सपरिश्रमं सर्वैः सर्वाङ्गपरिपूर्णतायै । संस्कृतसा—सम्मेलनन्यूनतादर्शनं नाम न केवलं सुरभारत्या अवमानकरम्, अपितु समग्रस्यापि भारतखण्डस्य भारतीयसंस्कृतेश्च । विद्वांसः, प्राध्यापका

विद्यार्थिनश्चान्ये संस्कृतानुरागिणः सकलाः एकैकशः सङ्घशश्च समागत्य पुण्यपुरं संस्कृतभाषोन्नतिसाहाय्येन पुण्यभाजो भवन्तु । कृतार्थतां च नयन्त्वात्मानं श्रीतिलकनिवासेन भारतभूदेव्यास्तिलकीकृतस्य अखिलराष्ट्रीयान्दोलनजन्मभुवो ज्ञानकेन्द्रस्य नवकल्पनासुरनदीप्रभवहिमालयस्य नवचैतन्यसूर्योदयपूर्वाचलस्य विद्वन्मणीनामाकरस्य सकलकलाकलापानां कुलनिलयस्य यथार्थनाम्नः पुण्यपुरस्य पुण्यदर्शनेन । संस्कृतभारतीमन्दिरे सनातनधर्मि-सुधारकयोर्विरोधाभावं स्पष्टमावेदयति श्रीद्रविडशास्त्रिणामाध्यक्ष्येण सम्मेलनमिदम् । अतो बाढमाशास्महे प्रशान्तविरोधैः सर्वैः संस्कृतप्रसारैकलक्ष्यैरत्यादृतस्य सम्मेलनस्यास्य प्रगतिपथप्रदर्शिनीं यशस्वितामित्यलम् ।

---

# अभिनन्दनम् ।

मधुरवाण्याः स्थिरजीवनाय शाश्वतनिधिसङ्ग्रहकार्यमारब्धमिति जानन्त्येव प्रियवाचकाः । तत्कार्यस्य महत्त्वमप्यवगच्छन्त्येव ते । सम्प्रति कार्यस्यास्य महत्तां जानाना अपि विरलाः । विरलतराश्च जानानेष्वपि सक्रियसहानुभूतिदर्शिनो महानुभावाः । विरलतमाश्च तेष्वपि मुक्तहस्तं शताधिकधनदायिनो महोदाराः । तेष्वेव अङ्गुलिपरिगण्येषु सुगृहीतनामधेयेषु महाभागेषु सम्मान्या वरिष्ठन्यायाधीशपदमलङ्कुर्वाणा मधुरवाणीं दुहितृनिर्विशेषं मन्यमानाः विविधसंस्कृतप्रबन्धरचनापटीयांसः संस्कृतसमुत्कर्षबद्धादराः सुरसरस्वतीकण्ठे नवनिबन्धरत्नहारकराः श्रीहरकारे गुण्डेरावमहाशयाः । अमी किल महाभागाः मधुरवाण्याश्चिरजीवितांकाङ्क्षिणः अप्रार्थिता अपि एकोत्तरशतरूप्यकाणां प्रदानेन सहस्रोत्तरधन्यवादानर्हन्ति । अयि वाचकवरेण्याः ! आवर्षं तूष्णीमेव सानन्दं सर्वानङ्कान् सादरं गृहीतवत्स्वपि बहुधा साञ्जलिबन्धं सप्रणामं सानुनयं साग्रहं सप्रणयं च-यावन्तो वर्तन्ते तैः सर्वैरपि प्रकारैर्बहुधा प्रार्थितेष्वपि समुचितदेयधनदानपराङ्मुखेषु केषुचिन्महाशयेषु (?) अपूर्वरत्नेष्विव (?) विराजमानेषु (?) प्रार्थनामन्तरेणापि स्वयंप्रेरणया शताधिकद्रव्यदानप्रवृत्तानां श्रीगुण्डेरावमहाभागानां महोदारतां कैर्वा शब्दैः कथं वा वर्णयितुमीश्महे वयम् । प्रथममेव तेषां सरलस्वभावेन अकारणप्रणयेन मधुरवाणीवात्सल्येन औदार्यादिगुणगणधारिणा च कदाऽप्यनुत्तरणीयायामध-

र्मणतायां पतिता वयमिदानींमीदृशसाहाय्योपकारभारेण नितरां नतकन्धरा: नाधिकं वक्तुमपि पारयाम: सानन्दबाष्परुद्धकण्ठा:, लिखितुमपि न प्रभवाम: रोमाञ्चकण्टकितेन करेण च । धन्यवादसमर्पणेनैवात्मन: कृतज्ञतां प्रदर्शयामो वयमिदानीं प्रदत्तशुभाशिष: ।

'सम्पत्सम्पदमनुबध्नाति' इति न्यायेन तादृशंपरमभिनन्दनकर्म अनुपदमेव कर्तुमानन्दसागरे प्लवते नो मानसम् । श्रीमहालक्ष्मीक्षेत्रे कोल्हापुरे कृतवसतयो धनलक्ष्म्या: प्रज्ञालक्ष्म्या: सदाचारलक्ष्म्या: औदार्यादिगुणलक्ष्म्याश्च सततं निवासभवनायमाना: निवृत्तलौकिकन्यायाधीशपदा अपि श्रीमन्न्यायसुधादिषु निबद्धारा: अन्वर्थित—सुगृहीतनामधेया: रा. ब. कृ. ना. श्रीपण्डिरावमहाभागा मधुरवाणी—सुरवाणीप्रणयगरिम्णा वे. शा. स. प्रातिनिध्येन शतरूप्यकप्रदानाभिवचन महोपकारभा रमुन्नानेवास्मानकार्षु: । महाभागानाममीषामुपकृतिं महतीं न कदापि विस्मरति मधुरवाणी । वयमपि सादरधन्यवादसहस्रमन्तरा केन वा प्रत्युपकुर्म: । 'आशास्यमन्यत्पुनरुक्तमेव श्रेयांसि सर्वाण्यधिजग्मुषां व: ' ।

'सिंहात्सिंह: प्रजायते' न्यायमेनमनुसृत्य श्रीपण्डितरावकांताचार्य महाभागपुत्रा: श्रीनारायणाचार्यमहाशया अपि रूप्याणां पञ्चविंशतिं मधुरवाणीशाश्वतनिधये सानन्दमार्पयन्निति निवेदयितुं नितान्तं सन्तुष्यामो वयं कृतज्ञतामरन्दतुन्दिलां सहस्रधन्यवादसहस्रपत्रमालां समर्पयन्त: सादरम् ।

अपर: कोऽपि महाभाग: साधुवृत्तिर्विषयविनिवृत्तचित्तवृत्ति: सन्ततवेदान्ताध्ययनप्रशान्तस्वान्तस्वांत: निजनाम—गुणख्यातिमनपेक्षमाण: तदप्रकाशनं प्रार्थयन्नेव मधुरवाणीशाश्वतनिधिकृते पञ्चविंशतिरूप्याणि स्वयमप्रार्थित एव प्रदाय अन्यदुर्लभं ख्यात्यकामुकतागुणं मधुरवाणीप्रणयमसाधारणमाविरकरोत् । तत्कृते' नितान्तं कृतज्ञा नैकशो धन्यवादान् मुक्तकण्ठं वितराम: सादरमनिच्छुकेभ्योऽपि तेभ्य: कर्तव्यबुध्या । अनिच्छतां तेषां सुगृहीतं नामधेयं कथं वा प्रकाशयाम: । कथंवा न प्रकाशयाम: उपकृतवतां तेषां नाम । उभयत: पाशारज्जु: ।

---

श्रीशः शरणम्

# प्रसन्नहनूमन्नाटकम्

( कर्ता:—पं. वैद्यराज—विश्वेश्वरदयालुशर्मा )

( पूर्वतोऽनुवृत्तम् )

हनुमान्—( गत्वा पुनः प्रविश्य ) भगवन् राम ! कुमार लक्ष्मण !

आज्ञप्तिमात्रेण मम प्लवङ्गैः समस्तवस्तूनि समाहृतानि ।
राज्याभिषेकं कुरु शीघ्रमेव सुग्रीव एषोऽस्तु चिरात्प्रहृष्टः ॥६८॥

( इति सर्वे गताः )

ततः प्रविशति रामो लक्ष्मणेन, निवृत्तराज्याभिषेकेण सुग्रीवेण च सह ।

श्रीरामः—

दारं न् प्राप्य भवान्प्रमोदमगमद् वित्तं दरिद्रो यथा
तद्वन्मामपि शीघ्रतो हि सुखिनं कृत्वा पणं पालय ।

सुग्रीवः—

नो वर्षासमये प्रभो ! समुचितं युद्धाय यानं यतः
तस्मात्सैन्यसुयोजनं दृढतरं कुर्यामहं तावता ॥ ६९ ॥

तावदत्रैव चित्रकूटपर्वते निवसतु देवः कुमारलक्ष्मणेन सह गृहीत-मदीयसपर्यः । प्रभो ! पश्य वर्षाविजृम्भणम् ।

चण्डांशोः प्रखरैः करैरतितरां तप्तां विशुष्कामृता-
मालोक्याश्रु विमुञ्चतीव सदयं धारामिषेणाम्बुदः ।
वामाक्षीं विरहाग्निलीनविलसल्लावण्यलीलामृतां
संवीक्ष्य प्रणयी यथा द्रुतमना बालां कृशाङ्गीं चिरात् ॥ ७० ॥

अन्तर्हितो भवति तीक्ष्णकरोऽपि भास्वान्
मायावृता मतिरिवाम्बुदलीनदेहः ।
गर्जन्ति केचन घनाश्च नितान्तमेव
मूर्खा यथा भृशमहङ्कृतियुक्तचित्ताः ॥ ७१ ॥

निशम्य घोरं नभसीह गर्जनं नृत्यन्ति केकामुखरा मयूरकाः ।
यथा प्रयुक्तेष्वनयेषु भूपतेः स्वभावदुष्टाः सचिवाः प्रमोदतः ॥७२॥

कीटाः पतङ्गा मशकाः प्रवृद्धा वृथैव नित्यं मनुजान् दशन्ति ।
विनैव हेतुं कुधियो यथा हि धर्मानुरक्तान् परिपीडयन्ति ॥ ७३ ॥

वर्षाजलं प्राप्य यथा वसुन्धरा बभूव सर्वत्र सुसस्यशालिनी ।
तथैव सन्तो धनधान्यपूरिताः परोपकाराय नियुक्तचेतसः ॥ ७४ ॥

प्रज्ञा–विचारोत्कटघर्षणेन ब्रह्मोपलब्धिश्च सतां यथा स्यात् ।
तथैव मेघद्वयघट्टनेन नभस्युदीर्णं चपलाख्यतेजः ॥ ७५ ॥

ग्रीष्मोष्मणो यथा शान्तिः शरत्काले हि जायते ।
वियोगिनश्चित्ततापः प्रियासंयोगतस्तथा ॥ ७६ ॥

अतः श्रीराम ! प्रभो प्रतीक्षस्व वर्षावसानम् । शरदि समागतायां त्वदीय-कान्तावृत्तान्तावगमाय प्रयतिष्यामहे । तदिदानीं चिराद्विरहदूनां समुत्कण्ठितां प्रियतमामुमां परिसान्त्वयितुमनुजानातु मां महाभागः ।

श्रीरामः–सखे ! कान्ता–रहितोऽपि कान्ताराहितोऽहं कथं नानुजानामि दयितासमागमसुखं ते । वयस्य ! यथेच्छमुपभुङ्क्ष्व विरहकालसङ्कल्पितक्री-

डासुखम् । परं तादृशसुखैककलोल: न विस्मरतु भवानुपकारिणं विरहिणं सुहृदम् ।

सुग्रीवः—तदा प्राणानपि विस्मरिष्यामि

( इति निष्क्रान्ताः सर्वे )

( ततः प्रविशति श्रीरामो लक्ष्मणेन सह )

रामः—लक्ष्मण !

सुग्रीवो– न समागतोऽत्र सुखितो राज्यश्रिया च स्त्रिया
वैदेह्याः कुशलं न चाऽप्यधिगतं कालश्च यातो वृथा ।

सर्वे स्वार्थपरायणा भुवि च ते ये वानरा वा नराः
अन्येषामुपकारिणां न गणयन्त्येते कृतघ्नाः शुचम् ॥ ७७ ॥

तत्त्वरया किष्किन्धामुपेत्य धूर्तस्य तस्य जानीहि भावम् ।

भ्रातर्मा कुरु शोकमाकुलमना रात्रिः सुखं नीयतां
प्रातस्तं वितनिष्य आशु विशिखैः सुग्रीवमग्रीवकम् ॥

रामः—

वत्सैवं वद मा रुषाऽयि सुहृदः क्षम्योपराधः सकृत्
तं सान्त्वोक्तिभिरानयानतमथोद्वृत्तं च बध्वा पुनः ॥ ७८ ॥

हनुमान्—( सहसा प्रविश्य ) भगवन् । मर्षयतु सुहृदपराधम् । अहमेव सुग्रीवं प्रबोध्य प्रभुचरणमुपानेष्यामि ।

( इति निष्क्रान्तः )

हनुमान्–( सुग्रीवमुपसृत्य ) वानराधिपते ! सुखोदधितरलतरङ्गप्लावितमानसो रामकार्यं विस्मृत्यात्राधिशेतेऽत्र भवान् कान्ताक्रान्तभुजाश्लिष्टः । प्रातस्तत्फलमुपभुङ्क्ष्व सुरकान्तोपगूढः स्वर्गसुखं भ्रात्रा वालिना सह ।

सुग्रीवः–सखे ! येन मे शान्तिर्भवेत्तदनुष्ठीयतां भवता ।

हनुमान्ः–तर्हि रात्रावेव सर्वदिग्देशस्थितान् वानरान् समाहूय सर्वासु दिक्षु विदिक्षु च सीतान्वेषणाय सत्वरं प्रेष्यन्तां ते । एवंकृते एव तव क्षेमं स्यात् ।

सुग्रीवः–कः कोऽत्र भोः ।

प्रतीहारः—( प्रविश्य ) प्रभुराज्ञापयतु कर्तव्यम् ।

सुग्रीवः—समाहूयतां सेनापतिर्नीलः ।

प्रतीहारः—यथाज्ञापयति देवः ( इति निष्क्रान्तः पुनः प्रविश्य ) महाराज ! समागतः सेनापतिः ।

नीलः—महाराज ! अयमभिवादयते नीलो भवन्तम् । आदिश्यतामयं कर्तव्ये कर्मणि ।

सुग्रीवः—सेनापते !

शूरान्समग्रान्प्लवगप्रकाण्डान् समानय त्वं सहसाऽत्र नील ! ।
नायाति यः पञ्चदशाहतोऽर्वाक्स प्राणदण्डं हि समश्नुते द्राक् ॥७९॥

नीलः—महाराज ! जगति निदर्शनीभविष्यति कठोरतरा कालातिपातासहिष्णुः सुग्रीवाज्ञा । भवतु । प्रभुनिदेशानुवर्तने अप्रमादिनः खलु सर्वे वानरवीराः ।

( इति निष्क्रान्ताः सर्वे )

---

# वृद्धनिर्वेदः

( लेखकः—क. वे. कृष्णमूर्तिशास्त्री प्राच्यविद्यासंशोधनमन्दिरम् पूना )

संकोचो मदसृग्धरा बत कदा व्याशिष्ट नो वेद्मि त-
त्पालित्यं समगादलोमसु तथा ज्योत्स्ना यथा शाद्वलम् ।
दंशं दंशमनन्तखाद्यनिवहान्दन्ता बभञ्जुर्मुखे
प्राणा यन्ति दिने दिने शिथिलतां तृष्णा तु नो शाम्यति ॥१॥

नित्यं पुस्तकवीक्षणान्मम दृशोः कुत्राप्यगात्पाटवं
श्रावं श्रावमसह्यघोरनिनदान्बाधिर्यमप्याप्नवम् ।
जग्धं जीर्यति नैव कुक्षिपिठरान्नो वेत्ति जिह्वा रसान्
पिस्पृक्षत्यबलाः परं हततनुर्धीर्धिक्प्रसूनायुधम् ॥२॥

अङ्गानामुपवीक्ष्य पाटवमहं मौर्ख्याच्चिरस्थायितां
तारुण्यस्य विचिन्त्य कुण्ठितमतिर्भोगैरताप्सं पुरा ।
प्रातः सायमिति क्रमेण बहवः संवत्सरा व्यत्ययुः
सत्संसर्गविहीनता तु भगवद्ध्यानान्निरुन्धेऽद्य माम् ॥३॥

या कान्तं मम वर्ष्म चारुवसनालंकारदृश्यं पुरा
दृष्ट्वाऽऽविष्कुरुते स्म पारविकलां प्रीतिं स्विकां यौवने ।
सेदानीं बत चक्षुषापि न बहिर्वेद्यां लुठन्तं क्षुधा
प्रक्षीणेन्द्रियमीक्षते सहचरी कालो ह्यभूद्दारुणः ॥४॥

ग्रामीणैर्मम बालकैरपहृतां यष्टिं विहारोत्सुकै-
र्मार्गे मार्गमतीव खिन्नहृदयं मां वीक्ष्य वेद्यां चिरम् ।
भो भो वृद्ध गृहाण वांशलगुडं मेतः परं त्वं मुचः
कुत्रापीति विडम्बयन्ति घृणयेवान्ये हसन्तः खलाः ॥५॥

आधावन्ति मदन्तिकं कतिपये बाला जराकौतुकात्
गाथाख्यानकहेलिकाः प्रतिदिनं सायाह्नि शुश्रूषवः ।
केचित्स्वप्रतलैर्मृशन्ति मुकुरप्रस्पर्धि मन्मस्तकं
कण्डूर्मेऽपकि[illegible] परे ॥ ६ ॥

वाहिन्या मधुरप्रसन्नसलिलप्राणान्गृहीत्वागताः
प्रेङ्खत्कङ्कणबाहुभिः क्वटितःश्लिष्टानूघटानङ्गनाः ।
निर्णिक्तांशुकभारखेदाविनमद्वामांसपाताद्धिया
साचीकारितकम्बुकन्धरममूः पृच्छन्ति मां भावुकम् ॥ ७ ॥

वार्धक्येन विनिद्रतामुपगतः कासामयाद्दुर्बलो
वेद्यग्रे स्वपतो जनस्य सुखिनोऽशक्त्या नितान्तं क्षुवन् ।
शब्दं नैव शृणोमि कंचिदपरं कौलेयकीयात्स्वना-
दैकागारिकभीषणाय भषितैर्यः प्राति मूका दिशः ॥ ८ ॥

धावं धावमचिन्तयन्दिनकरोष्माणं ललाटंतपं
वृष्टीश्चाशुगपातसंनिभमपां धाराः शरीरे घ्नतीः ।
द्रव्यं यत्समुपार्जितं तदधुना सर्वं विभज्यात्मजा
मन्यन्ते न तृणाय मां न च शुने को वा गतिर्मेऽधुना ॥ ९ ॥

नावागाहिषि निम्नगास्तनुमनःपापौघविध्वंसिनी-
र्न प्रासादमविक्षमुन्नततरैः कुड्यैः समन्तावृतम् ।
नाध्यायं मनसापि धूर्जटिपदद्वन्द्वं स्मयाद्यौवने
सोहंऽ संप्रति रोरवीमि यदि मां कः श्रद्दधीतेदृशम् ॥ १० ॥

---

# संस्कृत-प्रचारक-विद्यालयः मोहमयी।

( ले. श्रीरामजीपाण्डेयशास्त्री )
व्याकरण-साहित्य-मीमांसाचार्यो नव्यन्याय-वेदान्तशास्त्री।

येषु महानगरेषु सर्वदेशनिवासिनः कियन्तश्चन निवसन्ति तन्महानगरमाङ्गलभाषायां "कॉस्मापॉलिटन्" इत्यभिधीयते। एतत्पर्यायवाची शब्दः कोपि संस्कृतभाषायां साम्प्रतिक-व्यवहार-विषयो नास्ति! एतदर्थबोधाय यदि महानगरस्य विशेषणं सार्वदेशिकमिति क्रियेत तद्विशिष्टमिदं पदद्वन्द्वं तदर्थबोधनक्षमं भवेत्। ईदृशं सार्वदेशिकं महानगरं भारतवर्षेऽस्ति 'मोहमयी'। महालक्ष्म्याः क्रीडाक्षेत्रमिदं नगरं तदधिष्ठातृदेवताया मुम्बादेव्या नाम्ना मुम्बापुरीत्याख्यायतेऽपभ्रंशे च 'मुम्बई' इति। दाक्षिणात्यमिदं नगरमीशाजन्मनो बहोः पूर्वमरण्यानीपदेन व्यवहार्यमासीद्, ग्रामटिकापदेन, ग्रामपदेन, निगमपदेन वेति निस्सन्देहलेशं वक्तुं न पार्यते। यदा भारतीया यावनानां वशङ्गतास्तदानीमेतस्य काचिद्विशिष्टा स्थितिर्नासीदिति स्मर्यते। वाउकेश्वरस्योच्चायां भूमौ यत्र वाणगङ्गा प्रवर्त्तते-केचन मत्स्यजीविनो निवसन्ति स्म। वालकेश्वरस्य नाम बालिनामसम्बद्धं बालिकेश्वरमित्यस्ति, बालपरशुरामतपोवनतया बालकेश्वरमित्येव वेत्यपि सन्दिग्धमेव। **महाभारतकालेऽर्जुनो भीष्मपानाय वाणैर्विदार्य पार्थिवं वक्षो यां निस्सारितवान् सैवेयं वाणगङ्गेति केचित्पुराविद आचक्षते।** तदिदं पुरातनं वृत्तं सर्वकलनस्य महाकालस्यक्रोडे चिराय निलीनम्। अधुनातनीं मोहमयीं निरीक्ष्य चिन्तापद्धतिमपि न गच्छति प्राक्तनी स्थितिः।

सम्प्रति चतुर्विंशतावपि घण्टासु जागर्ति नगरमिदं न कदाचिदपि शेते। यदा साधारणा मानवाः स्वापमनुभवन्ति तदा निशीथे धनार्थिनो वैश्या द्विकं त्रिकं नवकं पञ्चकमित्यादिरूपेण महान्तं कोलाहलं कुर्वन्तो राजपथे मिलन्ति। तदानीं वैज्ञानिकाविभूत्याऽमेरुकायां लिख्यमानाः शब्दा अत्रत्यपट्टिकासु

पठ्यन्ते, ये बहूनां भाग्यं निर्धारयन्ति, कांश्चिद् भिक्षुकतां नयन्ति कांश्चिच्च धनाधिपताम् । महापथस्यैकस्मात् पार्श्वादपरस्मिन् पार्श्वे जिगमिषां भावत्कीं समुत्पद्यन्तीं शमयेदेव तदानीमपि मृत्तरमनुधावत् । अन्येषु समयेषु तु चिरं स्थित्वा मार्गरक्षकस्य कृष्णाङ्गरक्षकस्य पीतोष्णीषस्य राजपुरुषस्य श्वेतवस्त्र-मयदक्षबाहुना प्रसारितेन विज्ञाताभिप्रायेषु मृत्तरत्रामादिषु स्थितेषु तथाकर्तुं शक्यते, नान्यथा । अन्यथा बहुमूल्यस्य जीवनस्य किमपि मूल्यं न परिगण्येत मृत्तरत्रामवाहकैः ।

एवम्भूताया महानगर्या विष्णुलोकमिव किमपि हृद्यतमं स्थानमस्ति माधवबागपदाभिधानम् । यस्य द्वारि स्थितो वाराणसेयो वाराणसेयताम्बूल-विक्रेता यदि तद्वाराणसीं बोधयति तर्हि तत्तथ्यत्वं द्वारोपान्ते स्थितेन शूलिना स्वयं निगद्येत । मध्येगताय प्राणिने यदि गवां श्रेणी तस्य गोकुलत्व व्यनक्ति तर्हि स्वयं बंशीधरो लक्ष्मीनारायण एव तस्याः साक्ष्यं करोति, कृता-र्थयति च निजेन दर्शनेन समुपागतान् । सनातनधर्मस्य मूर्तिमत्केन्द्रमिदं समेषां सनातनधर्मिणां कृते निरवरोधप्रचारं भाषितु सर्वदा खुलितद्वारमेव तिष्ठतीत्यनुवेलं मिलन्तो वक्तारो वैदिकप्रवर्त्तनेनास्य ब्रह्मसभासमतां बोधयेयुः ।
**सायं चतुर्वादनतो नववादनपर्यन्तं समाजेऽपि नाना-विधानां जीवानां द्रष्टुं शक्येत । केचन शुश्रूषवः, केचन बुबोधयिषवः, केचन प्रतितारयिषवः, यत्र तत्र सर्वत्र भ्रमन्तो दृष्टिं प्रसन्नयेयुरेव ।**

श्रीलक्ष्मीनारायणस्य सम्मुखमेव विशालप्राङ्गणस्यैकपार्श्वे श्रीसंस्कृत-प्रचारक-विद्यालयो वरीवर्त्ति, यस्य नाम लेखस्य शीर्ष्णि दत्तम् । विद्यालयमेनं ये सञ्चालयन्ति ते सन्ति श्रीमन्तः पण्डितवरेण्या व्याकरणाचार्या ज्यौतिषिका द्वितीयाः श्रीरामचन्द्रशास्त्रिणः । समस्त–भारत–ख्यात–विद्वद्गणनायां प्रस्ता-वितायां येषां नामानि भवतोऽङ्गुलीःस्पृशेयुस्तेष्वन्यतमाः, 'संस्कृतज्ञा व्यवहारावेदिन' इति दुरपवादस्य मूर्तिमन्त इव खण्डनानि, सनातनस्य धर्मस्य रक्षणाय विहितबहुतरायासाः ।

'अधीतमध्यापितमार्जितं यशो
न शोचनीयं किमपीह भूतले।

**इत्यस्यनिश्चितरूपेण वाच्यत्वेन विषयीभूताः**, त्यागमूर्तय इमे। पुरा महाशया एतेऽध्ययनसमाप्तौ हृषीकेशेऽध्यापनमारब्धवन्तः। तत्र कियन्तश्छात्राः पूर्णां योग्यतामधिगत्य बहिर्निष्क्रान्ताः, येषु कतिपये यत्र-तत्राध्यापयन्ति, अन्यतमस्तत्रैव हृषीकेशे श्रीशास्त्रिमहोदयस्थापित एव विद्यालयेऽध्यापयति। शास्त्रिमहोदयेषु तत्र तिष्ठत्स्वेव महतीं श्रियमुवाह विद्यालयः, अधुना तु प्रौढतायां विद्यमानस्य तस्य विषये वक्तव्यमेव किम्, योऽयैरनेकैरध्यापकैर्मण्डितश्शताधिकच्छात्रेभ्यो वृत्तिं ददत् प्रचलति।

हृषीकेशमपहाय शास्त्रिमहोदया यां महानगरीमध्यतिष्ठन् तस्याश्चरितमारम्भ एव दत्तम्। अत्रागत्य स्थितानां तेषां या प्रतिष्ठाऽभवत्, यन्मानं मिलितम्, धनिवर्गेषु यद्गमनागमनमभवत्, दिगन्तेषु या ख्यातिरभवत् तदिदं सर्वं सर्वजनसाक्षिकम्। तैरेव धनिनः संप्रेर्य संस्थापितो मोहमय्यां जागर्ति श्रीसंस्कृतप्रचारक–विद्यालयः। संस्थापनकालेऽयं माधवबागे नासीत्, पश्चाद् भगवता लक्ष्मीनारायणेन दयया स्वान्तिके समाकृष्टः, ततो माधवबागसञ्चालकाः श्रीविट्ठलदासश्रेष्ठिप्रभृतयो भगवत्कोशादपि विशिष्टां सहायतां कुर्वन्ति, स्थानञ्च विस्तृतं निर्भाटकं ददति।

**विद्यालयस्थानमीदृशं मोहमय्यामन्यस्य कस्यापि विद्यालयस्य नास्तीति सगौरवं वक्तुं शक्यते।** अध्यापनमप्यत्र सर्वेषां शास्त्राणां प्रचलति। **व्याकरणज्ञवान्दिता अपि ज्योतिषार्णवाः श्रीशास्त्रिमहोदया अपि स्वयमध्यापयन्ति।** साहित्याध्यापकः श्रीविमलशङ्करशास्त्री विद्यालयादस्मादेव लब्धसाहित्याचार्यपदवीको नवयुवकगुर्जरपण्डितेषु सर्वप्रथमः स्वेनैव समः, स्वविषयं योग्यतया पाठयति। लेखकोऽप्यध्यापकेष्वन्यतमो नव्यप्राचीनन्याय–पूर्वोत्तरमीमांसा–व्याकरणादीनि पाठयति। सर्वेषां शास्त्राणामध्यापनमत्र प्रचलतीति ननु गौरवस्थानम्। **मीमांसा तु प्रायो मोहमय्यामत्रैवाध्याप्यते।** इदमपि गौरवं मोहमयीविद्यालयेष्वनेनैव लब्धं यत् कमपि गुर्जरदेशवास्तव्यमाचार्यपरीक्षोत्तीर्णं विद्वांसं स्वशरीर एवाध्यापनाय स्थानं समर्पयेत्।

च्छात्रेभ्यो या शिक्षा प्रदीयते सापि न केवलं भृतिकरणयोग्यतोत्पादिनी। निःसृत्य च्छात्राः कथं स्वीयां जीविकामर्जयिष्यन्ति, कथं प्रतिष्ठां पालयिष्यन्ति, कथं स्वीयं गौरवं गोपयितुं प्रभविष्यन्ति, इत्यादिषु पूर्णतयाध्यापकाः सचेष्टास्तिष्ठन्ति। प्रतिहायनं श्रीगणपति चतुर्थ्यां भाद्रे महानुत्सवो भवति, यत्र च्छात्राणां परस्परं वादा जायन्ते। ऐषमो वादसभाधिपत्यं श्रीमन्तो जगद्गुरवः श्रीशङ्कराचार्याः श्रीभारतीकृष्णतीर्थामहोदयाः कृतवन्तः। प्रथमदिवसे ये साभापत्यं कृतवन्तस्तेतु विद्यालयस्यास्य सार्वकालिकसभापतयः श्रीमद्वल्लभाचार्यचरणकुलालङ्करणा माननीयप्रवरा गोस्वामिनः श्रीगोकुलनाथ महाराजाः। एतेषां गुणेभ्यस्तु सर्व एव भारतीयविद्वांसः परिचिता इत्येतेषां संरक्षणे प्रचलतो विद्यालयस्यापि गौरवमनुसन्धातव्यमेव।

अधुना विद्यालयोऽयं समस्तमेव मुम्बईप्रान्तीयपण्डितमण्डलमेकस्मिन् सूत्रे ग्रथितुं, तद्द्वाराच भारतीयसंस्कृतसमाजस्य कल्याणं भावयितुं यतते। तदत्र महति कृत्ये सर्वेषामेव सुधियां सहाय्यं कामयमानः समापये विषयमिमम्।

# महाकविः कालिदासः

( चरितं काव्य-विवेचनं च )

( गताङ्कादनुवृत्तः )

प्रो॰ के॰ ना॰ वाटवे पुणें, एस॰ पी॰ कॉलेज.

तस्मिन्समये कालिदासं मन्दमतिं विज्ञाय प्रकुपिता सा भीतभीतात्तस्मात् आत्मवञ्चनावृत्तान्तमधिगतवती । व्रीडान्वितः कालिदासः अवनतशिराः "वसुंधरे देहि मे विवरमिति' ययाचे । तस्मिन् सञ्जातानुकम्पा राजपुत्री तमुवाच । "भद्रमुख ! यदि विद्यां प्रतिभां च कामयसे, वांच्छसि मादृशीं च गुणवतीं प्रज्ञान्वितां भार्यां, तर्हि गच्छ वनं, उपास्स्व च तत्र वर्तमानां कालीं, येन तत्प्रासादान्महाकवित्वं लप्स्यसे" इति । सोऽपि कालीमुपास्य प्रतिभां च समधिगम्य कान्तां दृष्टवान् । आगतमात्रं तं राजकन्या प्रपच्छ "अस्ति कश्चिद् वाग्विशेषः" इति । असौ तु प्रश्नगतमेकैकं शब्दं गृहीत्वा तदारम्भं काव्यं पपाठ । 'अस्युत्तरस्यां दिशि देवतात्मा इति कुमारसम्भवः, 'कश्चित्कान्ता विरहगुरुणा इति मेघदूतं, "वागर्थाविव सम्पृक्तौ" इति च रघुवंशम् ।

अन्यासु कथासु कालिदासस्य चातुर्यं, दीनजने अनुकम्पा, प्रत्युत्पन्नमतित्वं चेति बहवो गुणा दृश्यन्ते । परम् आस्तां नाम एषः कथाकलापः ।

महाकविरसौ कालिदासः कुमार–रघु–मेघदूताख्यानि त्रीणि काव्यानि, ऋतुसंहाराख्यमेकं निसर्गवर्णनपरं काव्यं, मालविकाग्निमित्र–विक्रमोर्वशीय–शाकुन्तलाख्यानि च त्रीणि नाटकानि विरचितवान् । एतासु मनोहरासु कृतिषु कालिंदासस्य, पाण्डित्यं प्रतिभा, लोकव्यवहारावलोकनं. स्वसंस्कृत्य-भिमानः भगवति चन्द्रशेखरे दृढा भक्तिरिति नैके रमणीया विशेषाः प्रतिपत्रं, अथवा प्रतिवाक्यम् अपि अनुभूयन्ते । अस्य उपमाचातुरी तु केवलं निरुपमा । तामुद्दिश्य "उपमा कालिदासस्य" इति प्राचीनरसिकपण्डितैः प्रवर्तितः कीर्तिडिण्डिमः अद्यापि जागर्ति । तस्य वाणी कोकिला इव चतुरालापनिसर्ग-पण्डिता । तस्य वर्णनानि च वसन्तसमय इव मनोहराणि अतः उक्तं रसिकैः-निर्गतासु

नवा कस्य कालिदासस्य सूक्तिषु प्रीतिः " मधुरसाद्रासु मञ्जरीष्विव जायते इति "

तारकासुरवधार्थं देवैः शिवपार्वतीविवाहः कथं कारितः, कथंच कुमारस्य जन्म अभूदिति वृत्तं कुमारसम्भवे वर्णितम । विवाहो न केवलं देहसुखाय किन्तु विश्वकल्याणायापि, तथा भार्यायां न रूपसौंदर्यं केवलं लक्षणीयं किन्तु गुणसौंदर्यमपि इति शुचि तत्त्वद्वयं रुचिरया रीत्या ध्वनिमार्गेण दर्शितं कालिदासेन ।

शाकुन्तलाख्यं नाटकं नाम कालिदासकृतिषु मूर्ध्नि विराजते। तद्वाचयित्वा नैके पाश्चात्य पण्डिताः हर्षनिर्भराः सञ्जाताः । चेझीसंज्ञकः कश्चन यौरोपीयः रसिकः कालिदासीयं ' आलक्ष्यदन्तमुकुलानिति पद्यं पठित्वा, शाकुन्तलं शिरसि कृत्वा च आनन्दपरवशः किल ननर्त । यदि इयान् आदरः परकीयाणां तद्देशीयानां अस्माकं स कियान् भवेदिति भवद्भिरेव तर्कणीयम् ।

यदि भवद्भिरिष्यते कालिदास कृतिषु परिचयः अभ्यस्यतां रघुवंशस्य द्वितीये सर्गे वर्तमानं सिंहदिलीपसंभाषणम्, परिशील्यतां रतिविलापः अजविलापोवा, वाच्यतां शाकुन्तलस्य चतुर्थः सप्तमो वा अङ्कः अथवा अविद्यमाने तावति अवसरे आलोक्यन्तां चतुर्थाङ्कतागाः चत्वारः एव श्लोकाः।

एतादृशोऽयं भारतवर्षस्य राष्ट्रकविः " प्रवर्ततां प्रकृतिहित य पार्थिवः सरस्वती श्रुतिमहतां महीयतां इति संदिश्य परे ब्रम्हणि लीनः केवलं कीर्तिशेषो भूत्वा अद्यापि उद्दीपयति नश्चेतांसि । तस्मै कवीश्वराय त्रैलोक्यनमस्याय प्रणम्य विरम्यते । इतिशम् ।

आखल–भारतीय नभोवाणी–मुम्बापुरी,
केन्द्राधिकारिणामनुमत्या.

# संस्कृताताध्यापनपद्धतिविषये विद्वन्मतानि।

( सङ्ग्राहकः-- हुपरीकरोपाभिधो गणेशशर्मा, एम्. ए. बी. टी.)
( संस्कृतप्राध्यापकः--श्रीम ता. टीचर्स कॉलेज, कोल्हापुर )

## प्रश्नः १२-लौकिककार्येषु संस्कृतज्ञानां संस्कृतवाग्व्यवहारः सुसाध्यो दुःसाध्यो वा, दुःसाध्यश्चेत्केन कारणेन ? सुसाध्यश्चेत् कैरुपायैः ?

१ भिन्नभिन्नभाषकाणां विदुषां हि परस्परम् ।
स्वाशयावेदना चेत्स्याद्देववाणी हि केवलम् ॥
परस्पराशयं स्पष्टमलमावेदितुं सुखम् ।
माध्यस्थ्यं (मं) आङ्ग्लभाषायाः सुतरामनपेक्षितम् ॥
विषयाणां हि नैकेषां ज्ञानसम्पादने खलु ।
युक्ता यथा मातृभाषा नान्या ह्याङ्ग्ला कुतस्ततः ॥
गीर्वाण्यां यदि प्रावीण्यं छात्राणां चेदभीप्सितम् ।
प्रयत्नेन विधातव्यो व्यवहारः परस्परम् ॥
गीर्वाण्यां, तेन सहजं सुलभा सा भवेत्खलु ।
सूक्तस्तोत्रादिद्वारेण प्रायो देवी सरस्वती ॥
नित्यमाह्निकरूपेण संस्तुता नात्र संशयः ॥
यथाधीतम्लेच्छवाचोऽन्योन्यं वा आङ्ग्लभाषया ।
दृश्यन्ते व्यवहरन्तस्तथैवामरभारती ॥
व्यवहार्या प्रयत्नेन निष्ठामास्थाय हार्दतः ।
कदाचिदेकशब्दस्य नैके रूपान्तरे पुनः ॥
शब्दानां जातु नैकेषामेकस्तत्राऽप्यलं भवेत् ।
अथापि भिन्नभाषासु स्वाशयाऽऽवेदने कचित् ॥
अन्तरायो नेति चेन्न स सर्वासां समः खलु ।
गीतार्णवे सुप्रसिद्धे दासोपन्तविनिर्मिते ॥
द्वितीयाध्यायव्याख्यायां " वेदवादरता " इति ।
अधिकृत्य द्विसहस्री ओवीना कविना कृता ॥
तत्रायं विषयः सूक्ष्मतया तेन विवेचितः ॥



रघुनाथरायपाटणकरशास्त्रिणः ।

(२) संस्कृतवाग्व्याहारः सुसाध्यः, अभ्यासप्रसङ्गाभावेनैव (दुःसाध्यः।) गीर्वाणसंवाद–विवादसभाः संस्थापयितव्याः।

—शिन्त्रेशास्त्रिणः।

(३) सुसाध्यस्तादृशानां ( संस्कृतज्ञानां ) गीर्वाणगिरा व्यवहारः। केवलात्र लज्जैव प्रतिबध्नाति मनोरथम्। 'सपत्नीविभवं दृष्ट्वा गङ्गाऽभून्मलिना कृशा'।

—पाध्येशास्त्रिणः

(४) लौकिककार्येषु संस्कृतज्ञानां संस्कृतवाग्व्यवहारो न लेशतोऽपि दुःसाध्यः, किन्तु सुसाध्य एव। नित्यभाषणाभावाद्दुःसाध्य इव भाति। नित्यभाषणाभ्यासेन नितान्तं सुसाध्यः। नात्र शङ्काकणिकाऽपि।

—रानडेशास्त्रिणः।

(५) संस्कृतज्ञानां संस्कृतवाग्व्यवहारो नासाध्यः। किन्तु तत्साधनार्थं व्यवस्थितं सहकार्यमावश्यकम्। यदि काचित् 'संस्कृतवाग्व्यवहारसंस्था' सामान्यविषयानधिकृत्यार्जवपुरःसरं वाग्व्यवहारप्रगतिं साधयितुमुत्पद्येत तदा संस्कृतवाग्व्यवहाराधिक्यं सम्भवेत्। तत्राप्यारम्भशूरत्वं तु हानिकरमेव स्यात्।

—पण्ड्यामहोदयाः।

(६) अभ्यासप्रयत्नेन सर्वं सुसाध्यम्। वाग्व्यवहारनैपुण्याय संस्कृतभाषाद्वारा संस्कृतभाषाध्ययनमवश्यम्। परकीयभाषाश्रयणेन वाग्व्यवहारो न सम्पाद्यते।

—शिखरेशास्त्रिणः।

(७) संस्कृतभाषा किमर्थमध्येतव्या? (१) तद्गतस्मृतिपुराणकाव्यादीनां सम्यग्बोधार्थं तद्गतस्य च रसस्यास्वादनक्षमतार्जनार्थं, (२) संस्कृतस्य प्रचारो व्यवहारेषु कार्य इत्येतदर्थं वा? (१) अत्रत्यं प्रथमं कारणं स्वीकृतं चेदिदं मयोच्यते, यदस्य सिध्यर्थं भाण्डारकरीया पद्धतिरवलम्बमर्हति। अत्र हि संस्कृतस्यार्थ आङ्ग्लभाषाया माहाराष्ट्र्या वा छात्रेण बोध्यः। संस्कृतेनैव तस्य विवरणं नापेक्षितम्। मनसाऽर्थस्य ग्रहणमेव प्रधानं साध्यम्। छात्रः संस्कृतेन स्वहृदयगतं भावं [illegible] वा। एकमपि वाक्यं

संस्कृते वक्तुं स काममसमर्थो भवतु । संस्कृतस्यार्थस्य ग्रहणे पटुत्वमेवालम् । तात्पर्यं—अस्यां पद्धतौ संस्कृतस्य व्यवहारे उपयोगो न चिकीर्ष्यते । केवलं नैपुण्यस्य प्रमाणज्ञानार्थमेव संस्कृतस्य भाषान्तरेऽनुवादोऽपेक्ष्यते । (२) अथ संस्कृतस्य व्यवहारे प्रचार इष्यते चेदहमेतं सर्वथा विरुन्धे । सकृल्लुप्तप्रचारा भाषा कोशव्याकरणबलेन भूयः प्रवर्तयितुमसमञ्जसमशक्यं च । निपुणमतयः पण्डिता ईदृशीं भाषां भाषितुं कल्पेरन्नेव । तथाप्यत्रैतदवश्यं ज्ञातव्यं यत्तेषां भाषा न पूर्वप्रवृत्ता संस्कृता यथार्थतः स्यात् । तस्यां परिस्थितिवशात्परिवर्तनमवश्यं भावि, येन पूर्वसंस्कृतादन्यैव काचिद्भाषा एतैः पण्डितैः प्रवर्तिता स्यात् । कालवशेन परिस्थितिबलाद्भाषाऽल्पशो नित्यमेव परिवर्तते । ज्ञानेश्वरीग्रन्थे दृष्टा माहाराष्ट्री क्रमेण परिणमन्ती आधुनिकं रूपं प्राप्ता । एवमेव, प्रयत्नापि पण्डितैः संस्कृतं प्राचीनरूपेण प्रचारयितुं न शक्यम् । तस्मिन् परिस्थितिवशात्तत्र तत्र भेदेनावश्यमेव भाव्यम् । कियच्चित्प्रमाणं यावत्, संस्कृताभिमानिभिर्बुद्धिसर्वस्वमुपयुज्य प्राचीनं संस्कृतं कञ्चित्कालं मिथो व्यवहारे प्रचारितमपि, तस्य शुद्धं रूपं क्रमेण भेदं प्राप्नुयात् । महाराष्ट्री भाषा संस्कृतात्कथं निर्गता ? ये जनाः पूर्वं संस्कृतं प्रायुञ्जत त एव शनैः शनैरल्पशो भिन्नं संस्कृतम्बुद्धिपूर्वं वक्तुमारभन्त । एष भेदो यथा यथोपाचीयत तथा तथा तेषां भाषा क्रमेण पाली, माहाराष्ट्री, ज्ञानेश्वरीगता महाराष्ट्री, आधुनिकी महाराष्ट्री इत्यादिरूपाणि क्रमशः प्रापत् । इत्थमेतदपि सुखेन वक्तव्यं यदधुना वयं संस्कृतमेव व्यवहारे नित्यं वदामः । अस्माकं महाराष्ट्रीहि हि क्रमशो भेदमारूढं संस्कृतमेव । कालवशात्तां तां परिस्थितिमनुभवन्ती भाषा चिरमेकरूपा न तिष्ठति । केवलमधुनैव, यदा मुद्रणयन्त्रेण प्रतिदिनं प्रभूतं वाङ्मयं सर्वत्र प्रसार्यते तदा, सर्वजनभाषा सर्वेषां सुखबोधार्थं चिरमभिन्नरूपा स्थातुं समर्था । ईदृशस्य मुद्रणयन्त्रस्य पूर्वं साहाय्याभावत्, पूर्वकाले भाषाः शीघ्रं परिवर्तनमापुः । एवम् ऋषीणां वंश्या वयं तेषामेव भाषां संस्कृतं नाम ब्रूमः । केवलमेषा भाषा कालवशाद्भेदमापन्ना

वर्तते । सङ्क्षेपतः—अस्माकं माहाराष्ट्री संस्कृताद् भिन्ना भाषा भवितुं नार्हति। तस्या एव परिवृत्तिमापन्नं रूपमेतदेव माहाराष्ट्र्या वर्णनं फलति ।

लुप्तप्रचाराया भाषायाः प्रतिष्ठापनमशक्यमेतदेव स्फोटयितुमिदमवधारणीयम् । अधुनाऽत्रत्याः (पुण्यपत्तनस्थाः) संस्कृतपण्डिताः 'चतुर्वादनसमये,' 'एषा सभा दशमे वर्षे पदं करोति इत्यादिप्रयोगान् भूयः कुर्वन्ति । अत्रेदं मया पृच्छयते, एते प्रयोगाः संस्कृता वक्तुं युज्यन्ते किम् ? काममेतद्गताः शब्दाः संस्कृता भवन्ति, तथापि समुदायप्रयोगास्तथाविधा न सन्ति । अत्र वक्ष्यमाणमुदाहरणं प्रेक्ष्यम्—'Manner' एष शब्दः 'less' इति प्रत्ययश्चोभौ आङ्ग्लभाषागतौ । तथापि तयोः समुदायः 'Mannerless' आङ्ग्लो नोच्यते । अद्यैव तावदीदृशी स्थितिः । केनचिन्महाभागेनाङ्ग्लविदुषा एष शब्दः प्रयुक्तश्चेत्स मानमर्हेत् लोके रूढिं प्राप्नुयात् । सर्वथाऽऽङ्ग्लभाषाप्रयोगोऽयमिति सर्वैः स्वीकृतोऽपि स्यात् । एतदेव वक्तव्यं यद्वर्धमानायामाङ्ग्लभाषायां विद्वत्प्रयोगो नवीनान् शब्दप्रयोगान् शुद्धान् प्रतिपादयितुं क्षमः । संस्कृते तु नेदृशी स्थितिः । यत्संस्कृतं प्रतिष्ठापयितुं वाञ्छयते तत्कालिदासबाणादिविद्वल्लिखितग्रन्थेषूपलब्धमेव । अर्थात्तेषां वाङ्मयेष्वदृष्टान्प्रयोगान् कोऽपि प्रचारयितुं न समर्थः । ईदृशाः प्रयोगाः प्रचारिता अपि पूर्वसंस्कृतात्त सर्वथा भिन्ना एव । संस्कृतं प्रचारभाषा चिकीर्षिता चेत्तस्यां तत्तत्परिस्थितिवशात् पूर्वसूरिग्रन्थदृष्टेभ्योऽन्ये प्रयोगा अवश्यं चिकीर्षिताः स्युः । (१) एते प्रयोगा आदृताश्चेत्, तद्गतं संस्कृतं भिन्नमेव संस्कृतं स्यात्, न च तत्संस्कृतं यत्प्रतितिष्ठापयिषितम । (२) अथैते नादृताश्चेन्मनसि वर्तमानो भावो वक्त्रा प्रकटयितुमशक्यः । तात्पर्यं—संस्कृतं पूर्वग्रन्थार्थग्रहणायैव पाठ्यं, न तस्य व्यवहारे प्रचारश्चिकीर्ष्यते ।

किञ्च—'अस्माकं पुरो वर्तमानं संस्कृतं प्रायो ग्रन्थगतमेव । सांलापिकं संस्कृतं' (Colloquial Sanskrit) अस्माभिर्नोपलभ्यते । योऽभिप्राय उपलब्धे वाङ्मये न दृष्टः स कथं व्यङ्क्तव्यः ? तदर्थं नवरचनाऽऽश्रयणीया । एतादृशी रचना यथार्थतः संस्कृतं वक्तुं शक्यते किम् ?

'ओरडणे' एतस्य भावस्य संस्कृतेन कथमाविष्करणं साध्यम् ? 'प्रत्याह्वानं' अत्र प्रयुक्तं चेत्, तेन विविक्षितोऽर्थो व्यज्येत किम् ? प्रत्याह्वानं नाम एकेनान्य आहूतश्चेत्तेन प्रथमस्याह्वानम् । अत उपरितनो भाव: संस्कृतेन कथं स्फुटीकार्य: ? अस्योत्तरं–ईदृशस्य भावस्योपलब्धसंस्कृतवाङ्मये यावददर्शनं, तावद्दातुं दुष्करमिति मे भाति ।

संस्कृतवाग्व्यवहार एतै: कारणैरपुरस्कारमर्हति–(१) पर्यायशब्देषु अर्थच्छटाभेद: संस्कृते न दृश्यते । 'पर्वत, डोंगर, टेकडी, टेकाड, डुंगी, उंचवटा' इत्यादिशब्दगतानर्थभेदान् बोधयितुमक्षमं सत् संस्कृतं व्यवहारे उपयोगानर्हम् । (२) संस्कृताध्ययनप्रयोजनं वाग्व्यवहारेण लेशतोऽपि दत्तहस्तं न भवति । (३) चिकीर्षितोऽपि वाग्व्यवहार: 'षष्ठे वर्षे पदं करोति' इत्यादिभिर्नूतनै: शब्दप्रयोगै: सर्वथा दुष्टतामियात् (Idiom) अतिवर्तेत । अतो यत्किमपि बुद्धिबलं नरे स्यात्तत्तेनानवश्यके संस्कृतवाग्व्यवहार विषये न क्षपणीयं, अपि तु माहाराष्ट्रीं मातृभाषामेव पोषयितुं परिष्कर्तुं चोपयोज्यमिति मे दृढं मतम् ।

— मोडकमहोदया: ।

प्रश्न: १३–विश्वविद्यालयोपाधिधारिण: संस्कृताध्यापका अध्यापनेऽन्यत्र वा संस्कृतभाषया सौकर्येण सम्भाषणादिव्यवहारं कर्तुं न पारयन्ति । तेषामध्यापने संस्कृतभाषाव्यवहार इष्टोऽनिष्टो वा ? इष्टश्चेदध्यापकैर्भाषाव्यवहारनैपुण्यं कथं सम्पाद्यम ?

उत्तराणि–

(१)–संस्कृतभाषाव्यवहारं न कुर्वन्तीत्येतस्य कारणं परिचयाभाव एव । इयं स्थिति: केषांचित्प्राचीनपण्डितानामपि दृश्यते । भाषाव्यवहाराय तत्परिचय एव कारणम् ।

—रड्डीशास्त्रिण: ।

(२) कापि सम्भाषणसृतिं विना पाठान्तरं विना ।
न वक्तुं सुलभा भाषा भारती तु विशेषत: ॥
लेख्य आह्निकवृत्तान्तो गीर्वाणयामप्यविस्मृते: ।
उपायोऽयमपि हितो मे मया विनिवेद्यते ॥

नोच्चारतुल्यं यल्लेख्यं यद्वर्णा नाप्यलं पुनः ।
आचारोच्चारविचारा येषामत्यन्तभेदकाः ॥
तद्भाषामात्मसात्कर्तुं यदि नो मधुरं वयः ।
वित्तं चित्तं च नाप्राप्तं व्ययीकर्तुं न शक्यते ॥
जनयित्र्यास्तत्र मातुर्भाषायाः स्वीकृतौ ननु ।
कियान्कालो भवेद्वीतो विचार्यं तन्मनीषिभिः ॥
हायनो हायनौ वाऽत्र भारत्यध्ययने ह्यलम् ।
नदीष्णो (?) यो बुभूषुः स्यात्तस्येयत्तां न चावधेः ॥
कात्यायनेन पठिते " सर्वे देशान्तरे " इति ।
वार्तिके हि महाभाष्ये कियान् वाङ्मयवारिधिः ॥
द्रष्टव्यः स च तत्रैव योऽभ्यस्तो हि मनीषिणाम् ॥

—रघुनाथरायपाटणकरशास्त्रिणः ।

(३) प्रोफेसराणामपि संस्कृतव्यवहार इष्टः सुखसाध्यश्च । उपाया द्वादशोत्तरे ।

—शिन्त्रेशास्त्रिणः ।

(४) न केवलं विश्वविद्यालयोपाधिधारिणः । अन्येऽपि प्राचीनोपाधिधारिणस्तथा इति मन्तव्यम् । तादृग्यत्नाभाव एवात्र हेतुः । एतेषां पुनरध्यापने संस्कृतभाषाया व्यवहारः प्राय इष्टसाधकः । नैपुण्यं तु स्वयं विचार्य ललितलेखनद्वाराऽधिगम्येतेति कलयामि ।

—पाध्येशास्त्रिणः ।

(५) अध्यापकैर्भाषानैपुण्यार्थं सर्वत्र गीर्वाणवाग्वर्धिन्यः सभाः संस्थापनीयाः । तासु प्रतिसप्ताहं प्रतिपक्षं वा संस्कृतव्याख्यानानि श्रोतव्यानि दातव्यानि च । एवं कृते कतिपयदिवसानन्तरं ते श्रोतारो व्याख्यातारश्च विद्वांसः सामीचीन्येन सुरभारत्या व्याख्यातुं प्रभवेयुस्तराम् । एवं सम्पादिते भाषानैपुण्ये सलीलमेवाकुतोभयतया तत्तदध्यापकाः संस्कृताध्यापनकलायां पटीयांसो भवेयुः । अधुनातनैः सकलैरपि प्राचीननव्यशिक्षितैस्तत्तद्विषये कृतभूरिपरिश्रमैर्विद्वत्तरैरेकीभूय बृहन्महाराष्ट्रवर्तिषु पत्तनेषु संस्कृतवाग्वर्धिन्यः संस्थाः संस्थापयितव्याः, कानिचित् सुरसरस्वतीसंवर्धनोपयोगीनि गीर्वाणभाषा-

मयानि मासिकानि प्रचालयितव्यानि। सति सम्भवे आत्मीयैरात्मजादिभिः सत्रा सुगमया गीर्वाणभाषयैव व्यवहर्तव्यं, प्रतिमहाशालं प्रत्याङ्ग्लशालं प्रतिसंवत्सरं 'सातारा' वत् 'वाई' वत् संस्कृतदिनाख्यः समारम्भः प्रारब्धव्यः। एवमादिभिः सार्वत्रिकैः प्रयत्नैः प्रयत्येत चेन्न किमप्यसाध्यं नाम।

—रानडेशास्त्रिणः।

(६) संस्कृतवाग्व्यवहारस्तु नित्यमतिशयेन चेष्टः। तत्प्रयत्ने मनःसमाधानात्तत्सम्पाद्यम्।

—शिखरेशास्त्रिणः।

(७) संस्कृताध्ययनस्य प्रधानहेतोरर्थग्रहणपाटवस्य संस्कृतभाषाव्यवहारनैपुण्यं लेशतोऽपि नोपकुर्यात्। अतस्तत्र परिश्रमेण कोऽर्थः?

—सोडकमहोदयाः।

(८) संस्कृतभाषापरीक्षासु प्रश्नैर्गीर्वाणवागङ्कितैरेव महाविद्यालयेषु भाव्यम्। अध्यापकैरपि महाविद्यालयवर्गशिक्षणे गीर्वाणवाग्व्यवहार एवाश्रयणीयः। एवं कृते न केवलं वाग्व्यवहारप्रगतिर्भवेत्, किन्तु प्राचीनटीकाकाराणां श्रमोऽपि सम्यगनुलक्ष्येत्। परीक्षासूत्तराणि स्वभाषायामपेक्षणीयानि। एवमध्यापकानां वाग्व्यवहारपटुता साध्येत्।

—पण्ड्यामहोदयाः।

प्रश्नः १४—संस्कृतशिक्षकाणां संस्कृतवाग्व्यवहारक्षमत्वाय महाविद्यालयीये संस्कृतपाठ्यक्रमे किं परिवर्तनमिष्यते?

उत्तराणि—

(१) अध्यापनसमयेऽध्यापकैर्नैवाङ्ग्लभाषा नो वा व्यावहारिकी भाषोपयोक्तव्या। सर्वथा पुरतः संस्कृतभाषयैव व्यवहारः कार्यः। शालायामन्तरान्तरा शाकुन्तलोत्तररामचरितप्रभृतयः प्रबन्धा रङ्गस्थलयामभियोक्तव्याः। संस्कृतवक्तृत्वोत्तेजनाय पारितोषिकाणि उद्घोष्याणि। सुलभसमस्यापूरणेऽपि यत्नो विधेयः। अभिजनसंस्कृतवक्तॄणां व्याख्यानानि विधेयानि। वार्षिकसम्मेलने विविधविषयोपन्यासाः संस्कृतभाषयैव विधेयाः। एवमादयः प्रयत्नाः कृताश्चेदचिरादेवेयं गीर्वाणवाणी सर्वासु भाषासु मूर्धन्यपदमलङ्कुर्यात्।

—रङ्गशास्त्रिणः।

(२) संस्कृतशिक्षकैश्चतुर्थपञ्चमकक्षयोः सप्ताहे होराद्वयं, षष्ठसप्तमकक्षयोस्तु सकलमध्यापनमुत्तरषण्मास्यां सुबोधसंस्कृतेनैव कर्तव्यमिति नियमे कृते ते सप्रयत्ना वाङ्निपुणाश्च क्रमेण भवेयुरिति भाति ।

—शिन्त्रेशास्त्रिणः ।

(३) परिवर्तनाभावेऽपि निर्दिष्टरीत्या संस्कृतवाग्व्यवहारक्षमता सम्पद्येत । इच्छाप्रयत्नौ चात्र प्रभवतः ।

—पाध्येशास्त्रिणः ।

(४) संस्कृतटीकाग्रहणशक्तिः सम्पाद्या । तच्छक्त्युत्कर्षेण वाग्व्यवहारपटुत्वमवाप्यते ।

—शिखरेशास्त्रिणः ।

(५) संस्कृताध्यापकैः संस्कृतवाग्व्यवहारक्षमत्वार्थं व्याकरणमहाभाष्यतः शावरभाष्यतः श्रीमद्भगवत्पादानां शारीरभाष्यतश्च तेषां तेषां सुललितानां परिच्छेदानां पठनं पारायणं च तेषां प्रमेयज्ञानाभावेऽपि केवलशब्दज्ञानार्थं कार्यम् ।

निजसुरेमहोदयाः ।

(६) संस्कृतवाग्व्यवहार एव मूलतोऽनपेक्षितश्चेत्, तस्य सिद्ध्यर्थं संस्कृतपाठ्यक्रमे परिवर्तनचिन्तया किं प्रयोजनम् ?

—मोडकमहोदयाः ।

(७) आङ्ग्लभाषायां Gerrish and cunningham's English composition इति पुस्तकं वर्तते । तस्याल्पानुसरणमाश्रित्य रचितानि संस्कृतपुस्तकानि शिक्षकैरभ्यस्यन्ते, तदनुसारेण च प्रबन्धरचने श्रमः क्रियते चेत्तदा स्वतन्त्ररचनाभ्यासङ्गेन वाणीप्रगतिर्भवेत् । एतदध्ययनं चेत्संस्कृतवाग्व्यवहारसंस्थाद्वाराः कृतैः श्रमैः सङ्कलितं भवेत्तदा वाग्व्यवहारपद्धतिरुत्तेजिता भवेत् । अत्र प्रचुरं भिन्नमतत्वं भवेत् । तथाप्युपरिनिर्दिष्ट उपायो न सर्वथा वन्ध्यः स्यात् ।

—पण्ड्यामहोदयाः ।

# इन्दुमती स्वयंवरः ।

(कुलकर्णी आर. एच. माडेल स्कूल, विद्यार्थी पंचमवर्ग)

अद्याहं किलागतोऽस्मि कर्तुं कालिदासविरचित रघुवंशस्थेन्दुमतीस्वयंवरवर्णनं यत्खलु युष्माकमुत्पादत्यालस्यं यच्चाल्पविषयमतेः दुस्तरमतीव । यूयं मम दोषान् परीक्षितुं 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिश्शामिकापि वा' एतद्वचनं विस्मृत्य श्रोतुमर्हथ ।

आसीदयोध्यायां नाम नगर्यामुत्तरकोसलराजधान्यां पुरा किलेक्ष्वाकुवंश्यः शतक्रत्ववमानं नेच्छुः तदेकोनशतक्रतुर्वीर्ये भीमसेनोपमानोऽतीवकुशलो भूपतिर्लक्ष्मीपतिश्च राजा रघुर्नाम वरतन्तुशिष्यकौत्साय कोटीश्चतस्रो दश च कनकनाण्यानां गुरुदक्षिणादाता । तस्यैकः पुत्रको राममन्मथ इव रूपवान्बृहस्पतिरिव बुद्धिमांश्च सूर्यवंशवर्धकश्चाजो नाम ।

प्राप्ते तु तस्य कालानन्तरं षोढशे वर्षे राजा रघुः क्रथकैशिकपालकेन राघवं स्वस्वसुरिन्दुमत्याः स्वयंवरार्थं प्रेषयितुं याचितः । विसृष्टस्तु स काकुत्स्थः ससैन्यो दारक्रियायोग्यदशो भार्यावरो विदर्भाधिपराजधानीम् । मार्गे शापान्मुनेः कस्यचिदुन्मत्तगजरूपधारिणं गंधर्वराजपुत्रं हत्वा सहर्षात् तस्मादस्त्रविशेषं लब्ध्वा सायासं सैन्येन सह विदर्भराजधानीं गत्वा तत्र पुरजनसहितविदर्भाधिपेनाभिनन्दितो निशां च तत्रैव भूपतिदत्तशयनमन्दिरे कथंचिदध्यगमयत् । उषसि च बन्दिभिर्विविधाभिर्मधुराक्षराभिर्गीर्भिः स्तुतियुक्ताभिः प्रबोधितः शयनं त्यक्त्वा दिवसमुखोचितविधिं कृत्वा कुशलविरचितानुकूलवेषः आत्मानमालोकयतां नृपाणां मन इन्दुमतीनिराशं कृत्वा सभामण्डपे क्लृप्तेन सोपानपथेन वैदर्भनिर्दिष्टमञ्चमारुरोह ।

रघुसूनौ तेषां महार्हासनसंस्थितानां नराणां मध्ये कल्पद्रुमाणां पारिजात इव भाति सति स्तुते च वंशज्ञबन्दिभिः, मङ्गलवाद्यनादे पुरोपकण्ठोपवनाश्रयाणां कलापिना मुद्धतनृत्यहेतौ च मनुष्यवाह्यां शिबिकामध्यास्य क्लृप्त-

विवाहवेषा पतिंवरा सेन्दुमती राजकन्या सभामण्टपं विवेश । आगता च तस्यां सर्वे नरेन्द्रा विधातुर्विधानातिशये कन्यामये निपेतुरन्तकरणैः केवलमासनेषु देहैः स्थिता अभवन्यदा, तदैवाभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः शृङ्गारचेष्टा विविधा अभवन् । कश्चिदेको नृपः करोपगूढलीलारविन्दं भ्रमयाञ्चकार येन तस्मिन्नृपे सूचयति तस्यै 'त्वयाहं करस्थकमलवद्भ्रमयितव्य' इति कन्या नृपकृतकार्यं सापलक्षणकमित्यमन्यत । अन्यश्च कश्चिद्विलासी रत्नखचितकेयूरकोटिलग्नमंसाद्विस्रस्तप्रालम्बमुत्कृष्य यथाप्रकारं समानीय तिर्यक्कृतसुन्दरवदनोऽभूच्च 'त्वामहं विवाहानन्तरं विस्रस्तप्रालम्बवत्परिरप्स्य इति सूचितवान्यदा तदैवेन्दुमती व्रणं किंचिदङ्गेऽस्मिन्नस्ति यस्य विरोपणार्थमेवं करोतीत्यमन्यत । अपरश्च राजा हैमं स्वपीठमाकुञ्चिताग्राङ्गुलिना पादेन लिखितवांश्च 'समाला त्वं मां प्रत्यागच्छेति यदाविरकरोदभिप्रायं तदा सेन्दुमती भूमिविलेखनमपलक्षणकमिति मनस्यमन्यत । कश्चिदपरो वामं भुजमासनार्धे निवेश्य वामापरावनतांसो मित्रेण सह भाषणे मग्नोऽभूद्येन स 'वामे निवेशितया त्वया वार्तामेवं करिष्य इति गदितवांश्चेन्दुमती च मां दृष्ट्वा पराङ्मुखो भवत्येष, च मित्रे सदा दृष्टे दर्शयत्यादरं चिराद्दृष्टां मां विहायेति तस्मिन्नकुप्यत् एवं बहवः शृङ्गारचेष्टा अभवन् ।

ततः परं श्रुतनृपान्वयवृत्ता वाग्मिनी प्रतिहाररक्षी सुनन्दा नाम मगधेश्वरस्य समीपं कुमारीमिन्दुमतीं नीत्वाऽवदत् । 'हे सहचरि, अयं शरणंगतानां शरण्यो मगधाधिपतिः प्रजारञ्जनलब्धकीर्तिः परंतपाभिधानोऽध्वरेषु समाहूतशतक्रतुः शच्याः पाण्डुकपोललम्बानलकानकरोत् । सहानेन येन भूमिं, रात्रिं चन्द्रमसा ज्योतिष्मतीमिव राजन्वतीमाहुः, पाणिग्रहणमिच्छसि चेत्प्रासादगवाक्षस्थितानां मगधराजधानीवनितानां नेत्रोत्सवं कुरु' एवं तस्यां कथयन्त्यां सत्यां तं मगधेश्वरमिन्दुमती नक्षत्रं चकोरीव विहाय सुनन्दया सहानुगच्छन्ती शत्रुदुःसहमवन्तिनाथं दौवारिकीदर्शितमद्राक्षीत् । सुनन्दा जगाद चैवं हे करभोरु! अयमङ्गनाथो यस्य शक्तित्रयस्य प्रयाणेषु निपुणाग्रेसरेभ्योऽश्वेभ्यः समुत्थितानि रजांसि सामन्तचूडामणीनां तेजोनाशं कुर्वन्ति चास्य

महाकालेश्वराभिधानचन्द्रमौलेः समीपे कृष्णपक्षेऽपि वनिताभिर्भवति रात्रिविहारः। तुभ्यं शिप्रातीरे स्नातुं तस्यास्तीरस्थोपवनेषु चामरलोकस्थोपवनोपमानेषु विहर्तुं यद्यस्ति मनसिच्छा, कुरु पाणिग्रहमनेन सह' इति। एतदाकर्ण्येन्दुमती नैच्छत्तं चन्द्रकमलं सूर्यमिव।

अनन्तरं सुनन्दा कुमारीमिन्दुमतीमन्यलोकगीतकीर्तेः शूरसेनाधिपतेः शुद्धाचारमातापित्रन्वयप्रदीपस्य पुरतो नीत्वागदत्। 'हे सुदति, असौ शूरसेनाधिपतिर्हिमांशूपमानकान्तिः यस्य कान्तिरात्मगेहे नयनाभिरामा तेजोऽसह्यं रिपुमन्दिरं संरूढ-तृणाग्र मकरोत्। चन्दनलेपितस्तनानां मथुराङ्गनानां जलक्रीडाकाले चन्दनैः कालिन्दी मथुरानगरस्थापि संसक्तभागीरथीव भाति। गरुडात्त्रस्तेन कालियेन दत्तकौस्तुभोपमानमणिना सह कालिन्दीं संसक्तभागीरथीमिव कर्तुमिच्छसि चेदमुं भर्तारं संभावय। एतद्वचनमाकर्ण्य सा लज्जिता तत्प्रीतिरहिता तं चातकी गतजलमेघमिव विहायैवमेवानेकनृपान् गुणसंपन्नान् श्रीपतीन् त्यक्त्वा जगाम यतो भिन्नरुचिर्हि लोकः। वीक्ष्याजं पुरतो विद्यमानं तत्रैवा प्रेत्साऽतिष्ठत्। सुनन्दा सा प्रीतिरस्ति इति ज्ञातवती बभूव।

यं यं व्यक्तिं क्रान्तवती स स भूमिपालो विवर्णभावं प्राप्तवान्। आगतायां तस्यामिन्दुमत्यां रघुसूनुः सा मां वृणीत वा नेति संशयितोऽभूच्च। दक्षिणबाहुः स्फुरणैः संशयमस्य नुनोद। तत्काले वंशज्ञा सुनन्दा गत्वा तं विस्तरमेवमाह। 'रम्भोरु! पुरा नृपाणां ककुदिक्ष्वाकुवंश्यः ककुत्स्थनामा राजा बभूव यस्य शब्दं कोसलेन्द्राः सविनयं सहर्षं बिभ्रति। स वृषभरूपधारिणमिन्द्रमारुह्य राक्षसान् हत्वा स्वकेयूरेण तस्य केयूरं संघट्टयंस्तेन सहैरावतमधिष्ठितवान्। ककुत्स्थस्य तस्य कुले रघुर्नाम राजा विश्वजिदध्वरकर्ता यश्च प्रभूतां विभूतिं मृत्पात्रशेषामकरोच्च परिच्छेतुमसाध्ययशाः जातः। रघोस्तस्यायमेकः पुत्रः द्वितीयरघुरिव अतः कुलेन, कान्त्या, नवेन वयसा, विनयप्रधानगुणैश्चात्मनस्तुल्यममुं वृणीष्व रत्नं काञ्चनेनेव समागच्छतु। एवं सुनन्दावचनान्तरे सेन्दुमती स्वयंवरणार्थं स्रजेव तमजं स्वीचकार अधृष्टतया वक्तुमसमर्थायास्तस्या अभिलाषो रोमाञ्चलक्ष्येण गात्रयष्टिं भित्वा

निराक्रमत्। एतद् दृष्ट्वा परिहासपूर्वं 'मन्यतो व्रजाम इति सुनन्दाऽगददिन्दुमती च रोषकुटिलं दृष्टवती सुनन्दाकराभ्यां स्रजमजकण्ठे यथाप्रदेशमासज्जयामास च यथाप्रकारं कृतमित्यवदज्जनसमूहः। कविरन्त्यश्लोकान्त्यभागे स्वयंवरमण्टपमुपमयानयालंकरोति।

"उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत्"। मम वचनादतः श्लोकमेतं पठित्वा वचनाद्विरमामि। कविरदृश्यः तान् स्वीकृत्य नन्दतु, संकटादेतस्माद्बहिरागतोऽस्मि इत्यहं नन्दामि..।

'कालिदास! नमस्तुभ्यं कवितावनितेश्वर।
कविस्तु लभते कीर्तिं त्वं तु ख्यातिं (काव्य) सुमानि च ॥१॥

मार्गशीर्षकृष्णदशम्यां सम्मिलितायां गीर्वाणवाग्वर्धिनीसभाया-
मुपन्यस्तस्यायं सारः।

---

## राष्ट्रगीतम्। (वन्दे-मातरम्) इतिवत्।

(पं. पुरुषोत्तमशास्त्री रानडे पुणें)

**वन्दे भारतीम्।**
**प्रयतां ललितां सकलसभाजिताम्।**
**विश्वमोहितां भारतीम्। वन्दे भारतीम्।**
**श्रुतिसूत्रस्मृतिवृन्दशोभिनीम्।**
**विविधज्ञानामृतपरिपायिनीम्।**
**सुसंस्कृतां, सुविधिविधायिनीम्।**
**शुभदां वरदां भारतीम्। वन्दे भारतीम्॥**

## श्रीसंस्कृतसंवर्धिनीसभायाः षोडशपुरस्थायाः

# तृतीयवार्षिकसमुत्सवः ।

अस्याः सभायाः तृतीयवार्षिकसमुत्सवः वैराजपुरस्थानां ( वाई ) श्री० प्रा० अच्युत कृष्ण पाध्ये महोदयानां व्याकरणाचार्याणां साभापत्ये दि० ७।१२।४१ रविवारे श्रीमतां हरिभाई देवकरण श्रेष्ठिवर्याणां भव्ये प्रासादे महता समारोहेण संजातः । तत्र अत्रत्यानां प्रतिष्ठितस्त्रीपुरुषाणां विद्यार्थिनां च भूयान् संमर्दः आसीत् । सभा प्रातः ८॥ वादनसमये समारब्धा प्रथमतः श्री० श्यामराव बेंद्रेमहोदयानां गायनमभूत् । ततः सभायाः पूर्वाध्यक्षाणां पं. नाथूरामशास्त्रिणां प्रास्ताविकभाषणादूर्ध्वं पूर्वनियोजितानां मं. अ. कृ. पाध्ये महोदयानां आध्यक्षे श्री. पं. नाथूरामशास्त्रिणः, वे० अनंताचार्याः परलकराः, प्रा० गो. प. पटवर्धनाः एम्. ए., पं. वासुदेवशास्त्रिणः बागेवाडीकराः, श्री. सुमतिदेवीशहा श्री. शं. दा. पेशवे श्री० जिनदासशास्त्रिणः, श्री शं. ना. मोहोलकराः, श्री. वंशीधर पंडिताः, श्री. रावजी नेमचंद शहा वाक्कीलाः, श्री. गं. गो. परिचारकाः, बी. ए. एल. एल. बी. च इत्येत्येतेषां ‘ संस्कृतभाषासमुन्नतिः ’ इति विषयं अधिकृत्य विविधाङ्गपरिशीलनात्मकानि भाषणानि संजातानि । ततः अध्यक्षाणां स्वल्पात्मकप्रास्ताविकसमारोपणानन्तरं श्री. शङ्करशर्ममोहोलकरैः अध्यक्षेभ्यः पुष्पहारः समर्पितः । ततश्च प्राभातिकः कार्यक्रमः समाप्तः ।

अपराह्णे पुनः श्री. बेंद्रे महोदयानां गायनेन सभा समारब्धा । ततः श्री. प्रियङ्करकुमाराः, श्री. गो. वि. काळे. एम्. ए., श्री० रामकृष्ण वैद्याः, श्री. मौक्तिकमणि त्रिपाठी, श्री. सतीशचन्द्रशास्त्रिणः इत्येतेषां स्वल्पानि भाषणानि संजातानि । ततः विद्यार्थिनां संवादाभिनयानन्तरं वृत्तान्तसन्देशादीनां वाचनम् अभूत् ।

ततः संस्कृतभाषा अधिकतरं राजकीयं उत्तेजनं लभतामित्यर्थकस्य पं. वंशीधराणां प्रस्तावस्यानन्तरम् अध्यक्षाणां सुविस्तृतं विद्वत्तापरिपूर्णं विनोद-

प्रचुरम् अस्खलितं च भाषणम् अभूत् । ततः संवादाभिनेतृविद्यार्थिभ्यः अध्यक्ष-हस्तेन पारितोषकाणि वितीर्णानि । तदूर्ध्वं सभायाः मंत्रिभिः श्री० शङ्करशर्म मोहोलकरैः अध्यक्षप्रभृतिभ्यः सर्वेभ्यः धन्यवादान् समर्प्य अध्यक्षेभ्यः पुष्प-हारः समर्पितः । ततश्च सर्वेषु वृत्तान्तपुस्तकपुष्पस्तबकादीनां वितरणानन्तरं सायं ५॥ वादनसमये सभा विसर्जिता । एवं संस्कृतभाषायां निखिलोऽपि कार्यक्रमः परमानन्देन समाप्तिं गतः ।

—शङ्करशर्मा मोहोलकरः मंत्री ।

---

# प्राप्तिः परामर्शश्च

**पालीभाषाप्रवेशः**–ग्रन्थोयं पुण्यपत्तननिवासिना तत्रस्थ " न्यू इंग्लिश स्कूल " इति सुप्रसिद्धविद्यालयाध्यापकेन पालीतीर्थ काव्यतीर्थादिविरूदालंकृतेन **पं. नारायण वासुदेव तुंगार महोदयेन** शास्त्रिवरेण सम्पादितः प्रकाशितश्च । या किल भाषा पालीति सुप्रसिद्धा विशेषतो बुद्धधर्मीयैः परमादृता प्राग् इति जानीयुरेव सर्वे विद्वद्वराः । तामिमां भाषां प्रवेशपरीक्षाया-मुत्तितीर्षवो बहवो विद्यार्थिनः समभ्यसितुमपेक्षन्ते इत्यपि नापरोक्षम् प्रेक्षावताम् । अतो विद्यार्थिनां यथा सुखबोधाय भवेदियं भाषा तथा महता प्रयत्नेन महाराष्ट्रभाषया तद्भाषारहस्यविदामग्रणीरयं तुंगारशास्त्रिमहाभागः ग्रन्थमिमं सम्पाद्य प्रकाश्य च महान्तमुपकारमकरोदिति निवेदयितुं नः परमः प्रमोद उपजायते । ग्रन्थोयं यथान्तरंगविषयसौन्दर्येण नितरामानन्दयति बुभुत्सूनामन्तरंगाणि, तथा सुश्लक्ष्णचिक्कणपत्रेषु परममनोहरायसाक्षरैस्सम्मुद्रितो बाह्यांगसौष्टवोपेतः प्रहर्षयति परं द्रष्टॄणां चेतांसीति नितान्तं हृष्यति नश्चेतः । अतो विद्यार्थिनो भाषामेतां जिज्ञासवो विद्वद्वराश्चापि तथा माध्यमिकेषु विद्यालयेषु पालीभाषामध्यापयितुंकामाश्चापि ग्रन्थमिममुपयोक्ष्यन्तीति उपयोज्य च सिद्धार्थाश्च भविष्यन्ति निस्संशयमिति बाढमाशास्महे वयम् । मूल्यमाणकद्वयाधिकमेकं रूप्यम् ।

प्राप्तिस्थानम्:– पं. ना. वा. तुगार [illegible] नारायणपेठ मुंजाबाचा बोळ पुणें २

ಶೂರ್ಪಾಲಿಯ ಆಚಾರ್ಯರು:—ग्रन्थायं बेळगांनगरनिवासिना कविकनकदासादिग्रंथप्रणेत्रा कर्णाटकसाहित्यक्षेत्रालंकारेण एस. जी. कट्टि बी. ए. एल. एल. बी महाभागेन विरचितोऽस्मत्करतलमनुप्राप्तः । अनुवाच्य यथावकाशं विमर्शमाचरिष्यामः । ग्रन्थकर्तॄन् समभिनन्दामश्च ।

---

## गङ्गावर्णनम् ।

सुशोभते सर्वफलप्रदात्री भागीरथी भाग्यनिधिर्निधीनाम् ।
पयोधिपर्यन्तमिवाद्रिराजान्निर्मापिता निर्मलराजवीथी ॥ १ ॥
हिमगिरि–तनुजन्मा मेनकामान्यधर्मा हिमकरधरभार्या भक्तरक्षैककार्या ।
हिमकररुचिशोभाप्राप्तमन्दस्मिताभा हिमसमसुषमाङ्गी भाति गौरीव गङ्गा ॥२॥
यस्यां जलस्नानभवप्रकम्पात् चलत्स्तनाभ्यां गलिताङ्गवस्त्राः ।
मुग्धाङ्गना ह्रीपरिगोपनार्थं जले निमग्ना वसनं धरन्ति ॥ ३ ॥
तीरे विहारोत्सुकताश्रितानां विलासिनीनां प्रतिबिम्बकान्त्या ।
स्मिताधरापाङ्गरुचा नितान्तं गङ्गा त्रिवेणीरुचमादधाति ॥ ४ ॥
स्थाने स्थाने हर्म्यसद्रम्यघट्टं घट्टे घट्टे मङ्गला लिङ्गगेहाः ।
गेहे गेहे वेदवेदान्तबोधः बोधे बोधे ब्रम्हतत्त्वानुभूतिः ॥ ५ ॥

ले॰ पं. श्रीतर्कतीर्थनीलकण्ठशिवाचार्याः ।

---

## संस्कृतभाषामाहात्म्यम् ।

( ले॰ पं. शिवरामशास्त्रीशित्रे एलफिस्टन कॉलेज मुंबई. )

अनादिनिधना ह्येषा संस्कृता वाग्विधीरिता ।
दुर्गेव नानारूपाढ्या सुरसेव्या विराजते ॥ १ ॥
क्वचिद्वेदवेदाङ्गसूत्रादिरूपै र्गभीराकृतिर्दुर्गमा चाब्धितुल्या ।
प्रसन्ना क्वचित्सर्गादिचोदनस्था पुराणेतिहासाख्यानकाव्यादिभेदैः ॥ २ ॥

भाषाणामादिभूता समुनिदिविषदामास्ति नानटूयमाना
विश्वारम्भस्य कालात्प्रभृति बुधगणैः सेविता वर्धिता च ।
स्वीयैर्ग्रन्थैरसंख्यैर्विशदयति समं याऽऽर्यसंस्काररूपं
सैषा गीर्वाणवाणी पटुरसिकधियः कस्य नाभ्यासयोग्या ॥ ३ ॥
धर्मस्थित्यन्तराणि श्रुतिमुनिवचने भूत सृष्टिं विसृष्टिं
पूर्वेषां चेतिहासं चतुरमतिपथागोचरं गूढरूपम् ।
साक्षात्कर्तुं यथावत्कृति—कुकृतिगणोद्बाधने चापि शक्तः
कः स्याद्दीप्येत नोचेत्सततरसमयी दीपिका संस्कृता वाक् ॥ ४ ॥

——

(क्रमशः)

वैद्य, डॉक्टर व आरोग्येच्छु जनता यांस

अत्यंत उपयुक्त असा वैद्यकीय ग्रंथ ( २२५ निवडक रुग्णाचिकित्सांचा संग्रह )

## निवडक रुग्णचिकित्सा

वैद्यपंचानन गंगाधरशास्त्री गुणे, वैद्य गोपाळशास्त्री बाईवारु, वै. विनायकराव एकतारे, आयुर्वेदाचार्य वेणीमाधवशास्त्री जोशी, वै. वि. म. गोगटे, वै. बिंदुमाधवशास्त्री पण्डित, वैद्य न. ना. बागेवाडीकर, वैद्य बापालालजी, वैद्य पु. वि. धामणकर, डॉ. दा. कृ. सांडू, डॉ. आगटे, डॉ. केतकर इत्यादि महाराष्ट्रांतील सुमारें ४० प्रसिद्ध वैद्य डॉक्टरांनीं लिहिलेल्या आपल्या वैद्यकीय व्यवसायांतील निवडक रुग्णचिकित्सा या संग्रहांत प्रसिद्ध करण्यांत आल्या आहेत. बहुतेक सर्व हकीकती सोपपतिक रीतीनें निवेदन केलेल्या असल्यामुळें आयुर्वेदशास्त्राच्या अभ्यासकांस त्यांपासून अत्यंत लाभ होणार आहे. आयुर्वेदीय वाङ्मयांत अशा प्रकारचा ग्रंथ आजवर झालेला नाहीं. सर्व प्रकारचे ज्वर, ( मलेरिया, टॉयफाईड, न्यूमोनिया इ ), अतिसार, संग्रहणी, पांडुरोग, जलोदर, प्लीहावृद्धि, सर्वांगशोथ, पांढरे कोड, गंडमाळा, रक्तगुल्म, कावीळ, अर्दित, पक्षाघात, गृध्रसी इत्यादि वातव्याधि, मूढस्थिरोग, कुष्ठ, वातरक्त, पिटिका, व्रण, स्त्रीरोग, कृमिरोग इत्यादि बहुतेक सर्व लहानमोठ्या विकारांवर शास्त्रीय अनुभविक उपाय या ग्रंथांत निवेदन करण्यांत आले आहेत.

या ग्रंथांतील सर्व माहिती इतक्या सोप्या भाषेंत लिहिली आहे कीं, आपण एखादा वैद्यकीय ग्रंथ वाचीत नसून गोष्टींचें पुस्तकच वाचीत आहोंत असा भास होतो. ( पृष्ठसंख्या २०० किंमत व्हीपि सह रु. ३।≈ )



प्रकाशक—मंत्री, आयुर्वेद-सेवा-संघ, अहमदनगर ( दक्षिण )

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्ग्लमासप्रथमसप्ताहे प्रकाश्यते ।

(२) अस्यांप्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः, प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मक लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा· न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं सार्धं रूपक-द्वयम् । अंकस्यैकस्याणकचतुष्टयं मूल्यम । द्वीपांतरवासिनां तु वार्षिकं मूल्यं पंचरूप्यात्मकम् । विना मूल्यंमादर्शसंचिका न प्रदीयेत । तदिच्छुभिश्च चतुराणमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पञ्चरूपकाणां दातारः सहायकाः दशरूपकदायिनः पोषकाः पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्तः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्या नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः। अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयरन् ।

(६) लेखा विज्ञापनानि समालोचनापेक्षिणो ग्रन्थाः पत्रिकाश्चेत्यादि सकलं **मधुरवाणी कार्यालय बेळगांव नं.** १६९८ इति संकेतेन प्रेष्यम् ।

पत्र मूल्यधनं वा प्रेषयद्भिः निजसकेंतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये 'ग्राहकसंख्यालेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

**प्राप्तिस्थानम्**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press, Belgaum by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

डिसेंबर १९४१.



॥ श्रीशः शरणम् ॥

# मधुरवाणी.

७ वर्षस्य ] १८६३ शके [ २ अङ्कः



सम्पादकः

गलगली रामाचार्यः

संस्कृतसाहित्यरत्नम्

सहसम्पादकः

बुली श्रीनिवासाचार्यः

संस्कृतसाहित्यभूषणम्

गव्हर्मेंट रजिस्टर्ड

# निलगिरी अर्क

सर्दी, पडसे,
डोकेंदुखी, ताप,
अजीर्ण,
कॉलरा, खोकला,
संधीवात,
सूज, ठणका व
हवाशुद्धीसाठीं

ನೀಲಗಿರಿ ಅರ್ಕ

वा. किं. ४ आ.
प्रत्येक
थेंब
गुणाचा
प्रभाव
दाखवितो.

# NILGIRI ARK.

**USE FOR**

RELIABLE REMEDY FOR COLD, FEVER, COUGH, PLAGUE, CHOLERA, RHEUMATIC PAINS ETC.

## स्टार कंपनी, बेळगांव.

# अनुक्रमणिका


| क्रमांकः | विषयः | लेखकाः | पृष्ठाङ्कः |
|---|---|---|---|
| १ | मंगलम् | पंढरीनाथशर्मागलगली | ४१ |
| २ | मासावतरणिका | ,, | ४२ |
| ३ | अन्योक्तिः | ,, | ४२ |
| ४ | प्रहेलिका | ,, | ४२ |
| ५ | स्वागतपद्यम् | पं. रानडेशास्त्री पुणे | ४२ |
| ६ | सप्तमवर्षारंभमहोत्सवः | स संपादकः | ४३ |
| ७ | स्वागतभाषणम् | संपादकः | ४६ |
| ८ | अध्यक्षभाषणम् | श्री. अनंतराव असुंडी डि—जज्ज गदग | ४९ |
| ९ | संस्कृतस्य सांस्कृतिकमहत्वं | कु. वैदेही डंबळ धारवाड कर्णाटक कॉलेज | ५२ |
| १० | संस्कृतस्यवर्तमानपरिस्थितिः | पं. हुलिकविः बेळगांव | ५४ |
| ११ | काव्यलक्षणम् | पं. शिंत्रेशास्त्री एलफिस्टन कॉलेज मुंबई | ५७ |
| १२ | कविवरः कालिदासः | प्रो. के. ना. वाटवे पुणे | ६१ |
| १३ | पं. वालीमहाभागाभिनंदनम् | पं. नीलकंठशिवाचार्याः सवदती | ,, |
| १४ | कालिदासविहितो राजधर्मः | रमेशशर्मा विद्यार्थी चिं. हांयस्कूल शहापूर | ६७ |
| १५ | श्रीकृष्णसुधालहरी | पं. रामनाथशास्त्री अमेरिकन कालेज मधुरा | ७० |
| १६ | प्रसन्नहनुमन्नाटकम् | वै. विश्वेश्वरदयालुः इटावा | ७३ |
| १७ | शोकोदगारः | पं. रानडेशास्त्रीपुणे | ७७ |
| १८ | महाभारत तात्पर्य निर्णयः | स. संपादकः | ७८ |

श्रीशः शरणम्




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

७ वर्षे ] १८६३ शाक मार्गशीर्षमासस्य [ २ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## मङ्गलम्

( कवयिता:——बालकविः पण्ढरीनाथशर्मा गलगली )

मान्यां त्वं व्रजकामिनीं व्रजसुतेत्युक्तोऽपि राधामगाः
किं? मान्या मम सैव, मेतरवधू याया ममेत्याशयः, ।
मातः सा वितरैव हि व्रजवधूरेवं प्रसूं मूकयन्
कृष्णो वृष्णिकुलाधिपः शमशुभं पुष्णातु मुष्णातु च ॥१॥
राधे ! शौरिरयं पिपासति पयो नीत्वा गृहाभ्यन्तरे
तत्पाणौ भवती पयोधरघटं तस्याधुना यच्छतु ।
स्वैरं चास्वदतां पयोधिकरुचि प्रीत्या धराच्छामृतम्
इत्थं मातृनिदेशतो रसिरतौ मादाय राधाच्युतौ ॥२॥

# अनुक्रमणिका


| क्रमांकः | विषयः | लेखकाः | पृष्ठाङ्कः |
|---|---|---|---|
| १ | मंगलम् | पंढरीनाथशर्मागलगली | ४१ |
| २ | मासावतरणिका | | ४२ |
| ३ | अन्योक्तिः | ,, | ४२ |
| ४ | प्रहेलिका | ,, | ४२ |
| ५ | स्वागतपद्यम् | ,, पं. रानडेशास्त्री पुणे | ४२ |
| ६ | सप्तमवर्षारंभमहोत्सवः | स संपादकः | ४३ |
| ७ | स्वागतभाषणम् | संपादकः | ४६ |
| ८ | अध्यक्षभाषणम् | श्री. अनंतराव असुंडी डि-जज्ज गदग | ४९ |
| ९ | संस्कृतस्य सांस्कृतिकमहत्वं | कु. वैदेही डंबळ धारवाड कर्णाटक कॉलेज | ५२ |
| १० | संस्कृतस्यवर्तमानपरिस्थितिः | पं. हुलिकविः बेळगांव | ५४ |
| ११ | काव्यलक्षणम् | पं. शिंत्रेशास्त्री एलफिस्टन कॉलेज मुंबई | ५७ |
| १२ | कविवरः कालिदासः | प्रो. के. ना. वाटवे पुणे | ६१ |
| १३ | पं. वालीमहाभागाभिनंदनम् | पं. नीलकंठशिवाचार्याः सवदती | ,, |
| १४ | कालिदासविहितो राजधर्मः | रमेशशर्मा विद्यार्थी चिं. हांयस्कूल शहापूर | ६७ |
| १५ | श्रीकृष्णसुधालहरी | पं. रामनाथशास्त्री अमेरिकन कालेज मधुरा | ७० |
| १६ | प्रसन्नहनुमन्नाटकम् | वै. विश्वेश्वरदयालुः इटावा | ७३ |
| १७ | शोकोद्‌गारः | पं. रानडेशास्त्रीपुणे | ७७ |
| १८ | महाभारत तात्पर्य निर्णयः | स. संपादकः | ७८ |

श्रीशः शरणम्




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

७ वर्षे ] १८६३ शाक मार्गशीर्षमासस्य [ २ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## मङ्गलम्

( कवयिता:—बालकविः पण्ढरीनाथशर्मा गलगली )

मान्यां त्वं व्रजकामिनीं व्रजसुतैरुक्तोऽपि राधामगाः
किं? मान्या मम सैव, मेतरवधू याया ममेत्याशयः, ।
मातः सा स्थितैव हि व्रजवधूरेवं प्रसूं मूकयन्
कृष्णो वृष्णिकुलाधिपः शमशुभं पुष्णातु मुष्णातु च ॥१॥

राधे ! शौरिरयं पिपासति पयो नीत्वा गृहाभ्यन्तरे
तत्पाणौ भवती पयोधरघटं तस्याधुना यच्छतु ।
स्वैरं चास्वदतां पयोऽधिकरुचि प्रीत्या धराच्छामृतम्
इत्थं मातृनिदेशतो रसिरतौ मोदाय राधाच्युतौ ॥२॥

## भासावतरणिका

यस्मिन् प्राग्विजयं प्रवृत्तमकरोद्युद्धं निवृत्तं ततः
श्रीशः प्रागिति तत्सुतोऽपि मदनः सर्वांश्च वीतस्पृहान् ।
योगीशांस्तदनङ्गसङ्गरसमासक्तान्विधत्तेऽधुना
मार्गस्थानपि मारमार्गणहतान् मार्गः स भासाग्रणीः ॥

## अन्योक्तिः

यत्संरक्षण शिक्षणादि सकलं ध्वाङ्क्षेषु, भक्ष्यं कटु
निम्बं, कूजसि मञ्जुलं तदपि रे शिञ्जानमञ्जीरवत् ।
आवाल्यः पिकपाक ! कोकिलकुले चाभक्षयिष्यो नवं
माकन्दं न्वभविष्यदङ्ग कियती सा माधुरी ते स्वरे ॥

## प्रहेलिका

यः पूर्णः प्रतिपादयेन्ननु हरं लुप्ताद्यवर्णो हरिम्
अन्त्यद्विप्रथमैकवर्णगलनान्निष्पन्नशब्दः स्मरम् ।
तस्यान्त्याक्षरयोजनेन हननं, लक्ष्मीं विपर्यासितः
पूर्णान्त्यत्यजने शिवं, वद स कः शब्दोऽस्ति पञ्चाक्षरः॥

## स्वागतपरं पद्यम् ।

पं॰ पुरुषोत्तमशास्त्री रानडे पुणे

मङ्गलमयसमयोऽयम् विलसति मं स । मधुरवाण्या वाग्वर्धिन्याः ।
सप्तमवार्षिकमहमिह मान्याः । समलंकर्तुं मिलिताः संप्रति ॥ मं ॥
श्रीमदखुण्डी बुधजनमहितः ।· प्राड्विवाकवर-धीमदनन्तः
सदसस्पतिरिति दिष्ट्याऽधिगतः । समजायत किमु हेम्नि सौरभम ॥१॥मं.॥
श्रोत्रियपण्डित पौरमानवाः । प्राचार्यादिक महानुभावाः ।
स्वागतेन वः समभिनन्दितुम्, अनुभवति मनो महाप्रमोदम् ॥२॥ मं. ॥

## मधुरवाणी-गीर्वाणवाग्वर्धिनीसभासंस्थयोः

# सप्तमवार्षिकारंभमहोत्सवः

प्रेष्ठाः पाठकश्रेष्ठाः ! विशिष्टतया प्रहृष्टा वयं यदनयोरुभयोरपि संस्थयोरुद्दिष्टकर्मानुष्ठानतत्परयोर्हन्त सप्तमवर्षारंभप्रयुक्तमहोत्सवमनुष्ठातुं सम्प्राप्तः शुभावसर इति । कार्तिककृष्णद्वादश्यां रविवासरे नवांबरमासयिषोडशतमे तारके सायं पंचवादनसमये महोत्सवोऽयं प्रावर्तत । अतिसुन्दरं सुविशालं नगरभूषणं सार्वजनिकवाचनालयसभामन्दिरमलंकृतमासीत् । प्रमुखाश्च सर्वे नागरिका गीर्वाणवाणीप्रणयमसाधारणमाविष्कुर्वन्तः समये सन्निहिता अभूवन् । सरससुरभारतीसेवाबद्धादरा महोदाराः निवृत्तवरिष्ठन्यायाधीशपदा असुण्डी अनंतरावमहाभागाः सत्यपि कार्य बाहुल्ये संस्थाद्वयमुपकर्तुमेव गदग नगरतः समये सुवेगशालिना स्वीयेन मरुत्तरयानेन सम्प्राप्ताश्च प्राहर्षयन् कार्यकारिमण्डलसदस्यान् ।

बालिकादर्शविद्यालयीना बालिकाः, तथा संगीतकलाविशारदो 'महाले' महोदयश्च सुमंगलस्वागतगीतैरानन्दयन् अखिलान् सभास्तारान् । मंगल-स्वागत-राष्ट्रगीतानि पद्यानि पुण्यपत्तनस्थगीर्वाणवाग्वर्धिनीसभाध्यक्षैः पण्डितपुरुषोत्तमशास्त्रिरानडेमहाभागै रचितानि ह्यनुप्रेषितानि मुद्रितान्यस्मिन्नेवांके मधुरवाण्याम् । ततश्च सुरभारतीसंसेवनबद्धादरो गीर्वाणवाग्वर्धिनीसभोपाध्यक्षः श्रीमान् एम्. पी वाली एम्. ए. महोदयः सभाप्रास्ताविकमनूद्य श्रीमंतो महाभागा अनंतराव-असुण्डीमहाशया अध्यक्षपदमलंकुर्वन्तु इत्याभ्यर्थयत । अभ्यर्थनामेनामन्वमोदत् श्रीमान् वैद्यरत्नवाटवेमहाभागः । अलमकुर्वन् अध्यक्षपदमध्यक्षमहोदयाः । ततो मधुरवाणीसम्पादका गीर्वाणवाग्वर्धिनीसभाध्यक्षाः 'संस्कृतसाहित्यरत्नम्' गलगली रामाचार्याः संस्थयोरुभयोरभ्युदयमाशंसंतो हि समुपस्थितेभ्यः सर्वेभ्यः स्वागतं व्याहरन् । ( भाषणमेतदप्यस्मिन्नेवांके प्रकाशितम )

ततो मधुरवाणीसहसम्पादकाः 'संस्कृतसाहित्यभूषणम्' बुर्लीश्रीनिवासाचार्याः अभ्युदयाशंसिनः सन्देशान् समवाचयन् । तत्र प्रामुख्येन परिगण्य-

मानास्तु पुण्यपत्तनस्थ गीर्वाणवाग्वर्धिनीसभाध्यक्षाणां पण्डितवरपुरुषोत्तमशास्त्रि-रानडेमहाभागानाम्, तथा पुण्यपत्तनस्थवरिष्ठन्यायाधीशपदमलंकुर्वाणानां श्रीमतां एन्. एल्. ठाकूरमहाभागानाम्, पुणेन्यूइंग्लिशस्कूलसंस्कृताध्यापकानां काव्यतीर्थपालीतीर्थादिविरुदभूषितानां ना. वा. तुंगारशास्त्रिमहोदयानामासन्।

ततश्च संस्थयोरुभयोरितिवृत्तमावेदयन् बुर्लीश्रीनिवासाचार्यमहोदयाः। तत्सारांशश्चायम्।

वत्सरेऽस्मिन् सभासु विशेषेऽपं यद् विद्यार्थिनोऽपि अहमहमिकया भागमगृह्णन् पुरस्कृत्येति। तद्भाषणानि च मधुरवाण्यां प्रकाशितान्येव। नागरिका विद्वांसः शास्त्रिणो वैद्यविद्यानिष्णाता अध्यापकाः प्राध्यापकाश्च भागग्रहणेन महांतमुत्साहमभ्यवर्धयन्निति नितान्तमभिनन्दनीयास्ते महाभागाः। तथा साहित्ये भाषामहत्त्वे आयुर्वेदे आध्यात्म्ये काव्यविमर्शे कविकुलचरिते गीतायामन्यान्येषु विषयेषु च तत्तद्विषयविशारदा वाग्वैखरीं प्रादर्शयन्। अग्रिमे वत्सरे च इतोऽप्यधिकतया भागं गृह्णीयुरखिला अपीत्याशंसा च कृता। एकान्तरितशनिवासरे मधुरवाणीकार्यालये सायं सार्धषड्वादनवेलायां सभेयं सम्मिलिष्यति चत्वारिंशदधिकाः षष्टिपर्यन्ताश्च लोका आगमिष्यन्ति चेति। मधुरवाणी तु जननतः प्रभृति दिक्षु विदिक्षु प्रसरन्ती आत्मनो गुणगणगौरवेण प्रियपाठकान् प्रीणयन्ती गीर्वाणवाणीप्रसारणपरायणा काश्मीरादासिंहलम् विद्वद्वरैरतितरां प्रशंसिता प्रतिदिनमेधमानयशोभास्वरा अंगवंगकलिंगपंचनुमगधसौराष्ट्रविदर्भमहाराष्ट्रेषु कर्नाटकाध्रचोलकेरलादिषु च प्रसारमधिकमात्मनः कुर्वन्ती सुरसरस्वतीं संसेवते इति तु विदितमेव विश्वेषाम् विद्यावताम्। या किल गतवत्सरे प्रथमसंस्कृतसाहित्यसम्मेलनम् सम्मेलय अतियशस्वितया प्रावर्तयच्च। यद्दर्शनप्रहृष्टाः सुप्रसिद्धा राजकारणधुरन्धरा, महाराष्ट्रसाहित्यसम्राजो न. चिं. केळकरमहाभागा अभ्यर्थिताः, पुण्यपत्तने मूर्तिमद्भिरिव गीर्वाणवाणीप्रणयैः सुरसरस्वतीव्याहरलभैः ... पुरुषोत्तमशास्त्रिरानडे, के. ना. वाटवे.

प्रभृतिभिरुत्साहभरितैः मिलित्वा अचिरादेव द्वितीयं संस्कृतसाहित्य-सम्मेलनमधिवेशयिष्यन्ति चेति महान्ः प्रमोदः सर्वेषां संस्कृतप्रणयिनाम्। एवमेवं सं. सा. परिषत् प्रतिवत्सरं तेषु तेषु नगरेषु सम्मेलिष्यमाणा आचन्द्रतारक मुद्दिष्टकार्यकरणक्षमा विभ्राजतामित्याशास्महे,

मधुरवाणी गीर्वाणवाग्वर्धिनी चेति संस्थाद्वयेन जगति संस्कृतभाषाया एव राष्ट्रभाषात्वं आगोपालमांगनम् व्यवहारविषयत्वमापादयितुं च उत्सहामहे वयम्। एतदर्थे च प्रचलितव्यवहारचर्चापरानेकविषयोल्लासिनी सुमधुरसरलभाषाशालिनी कापि संस्कृतसामाहिकी अवश्यमपेक्षिक्ष्यतेच। आयोध्यिकं 'संस्कृतं' संस्कृतस्य राष्ट्रभाषात्वं सम्पादयितुमहर्निशं प्रयतमानमस्त्येव। तथापि दक्षिणेप्येका विविध-विषयैराकर्षयन्ती सुरुचिराकारा मनोहारिणी सुमधुरव्याहारिणी पत्रिका-प्यपेक्ष्यते एव। एवं च भाषाभिन्नेषु प्रातिस्विकतया सर्वेषु विषयेषु तत्रतत्र संस्कृतसंवर्धनाय पत्रिका बह्वयः अपेक्षिताः। तादृशसुमंगलावसरप्राप्तिपर्यन्तमखिलेपि दक्षिण एका, उत्तरेचैका आवश्यकी इत्यभिप्रैमः। परमेकस्याः साप्ताहिक्याः प्रकाशने बद्धपरिकराणामप्यस्माकं महासमरहेतुका कागदादिमहर्घता भीषयन्ती उत्साहभङ्गमाचरंती साहसादस्मान्निवर्तयति। मधुरवाणी-प्रकाशनेऽपि कागदादिमहर्घताभिया साशंका अपि वयम् प्रियपाठकानां प्रणयौदार्यमवलम्ब्यैव प्रातिस्विकतया द्वित्रानपि ग्राहकान् अधिकतया सम्पाद्य अनुपमसाहाय्याचरणेन भारमस्माकं लघूकुर्युरिति विश्वासबलादेव प्रवृत्ताः स्मः तस्मिन्कर्मणि। सम्प्रात किल एतदादिकार्यकरणाय स्वतंत्रमुद्रणालय-स्थापनम्, सुबृंहितग्रन्थालयोद्घाटनम्, सुविशालमन्दिरनिर्माणं च सर्वथापेक्षि-तमिति एतदर्थेच शाश्वतनिधिसंग्रहे प्रवृत्ताश्च स्मः एतेनैव निधिना विधाय विहितसाधनसम्पूर्तिं प्रवर्त्स्यामहे सोत्साहम् सर्वत्र संस्कृतभाषाप्रसारायैव विविधै-रुपायैः। केचन च सुगृहीतनामधेयाः पुण्यात्मानो मुक्तहस्तं प्रायच्छन् धनम्। यच्छंतु चान्ये इत्यपेक्षामहे च। इदानीं विद्यमानाः सर्वे अपि ग्राहकाः द्वित्रानेकमपि वा ग्राहकं संपाद्य तथा स्वस्वयोग्यमधिकं यावदभीष्टं धनं संस्कृतभारतीसेवायै संप्रेष्य प्रोत्साहयन्तु इत्येनमाहि समभ्यार्थयन्।

ततोऽध्यक्षमहोदयाः प्रास्ताविकभाषणादादावेव संयुक्तप्रान्तीय भूतपूर्वकुलपतीनां महामहोपाध्यायगंगानाथझामहोदयानाम्, तथा धारवाडस्थविद्वद्वर महामहोपाध्यायनागेशशास्त्रिणां च स्वःप्रयाणनिमित्तं दुःखप्रदर्शकं प्रस्तावं पुरःस्थाप्य ततः किंचित् प्रास्ताविकं संभाष्य प्रधानवक्तृभ्यो भाषणमारब्धुं न्यवेदयन् । धारवाडकर्णाटककॉलेजाध्यापकाः पण्डितवराः शिवणगीविठ्ठलाचार्यमहाभागाः संस्कृतस्यैव राष्ट्रभाषात्वे योग्यता न सर्वथान्यभाषाणामिति सप्रपंचं सयुक्तिकं सप्रमाणम् परिणामकरमुपन्यस्य सर्वान् प्राहर्षयन् । ततो धारवाड नगरीयमहाविद्यालयविद्यार्थिनी प्रवेशपरीक्षायां मुम्बईप्रान्ते अखिलास्वपि कुमारीषु संस्कृते प्रथमतया परीक्षायामुत्तीर्णा संपादितविविधपारितोषका कुमारी वैदेहीडंबळनाम्नी 'संस्कृतिः संस्कृतं' चेत्यस्मिन् विषये सुमधुरमुपान्यस्यत् । ततः सरदारहायस्कूलसंस्कृताध्यापकः पं. इलिकित्रिमहाभागो भाषाप्रसारस्यावश्यकतामुद्दिश्य सरसमभाषत । एतयोरपि भाषणे अस्मिन्नंके मुद्रिते । ततः प्र. सं. सा. सम्मेलनावसरे अत्रत्येभ्यो निबंधलेखकेभ्यः सुवर्णपदकप्रशस्तिपत्रिका अध्यक्षैः प्रादीयन्त । ततः अध्यक्षमहाभागानामतिसरसं महत्वपूर्णं भाषणमभूत् । एतदपि मुद्रितमस्मिन्नंके । माध्यमिकशिक्षकविद्यालय प्राध्यापका गी. वा. स. उपाध्यक्षा एस्. आर भटमहाभागाः अध्यक्षव्याख्यातृसभ्यादिसर्वेभ्योऽपि धन्यवादवितरणपूर्वकमभ्यनन्दन् । ततश्च सुरभिमाला-गुच्छवितरणादिना विसर्जिता च सभा । संस्थयोरुभयोः सप्तमवार्षिकोत्सवसमारंभो महता उत्साहविशेषेण परिपालित इति ।

---

स्वागताध्यक्षाणां मधुरवाणी संपादकानां श्री. गलगली रामाचार्याणाम्

# स्वागतभाषणम्

अयि सुरभाषाप्रणयिनः मान्याः सभासदः ! तथा प्रियविद्यार्थिनो- विद्यार्थिन्यश्च ! अद्य किल मधुरवाण्याः गीर्वाणवाग्वर्धिनीसभायाश्च सम्मिलिते सप्तमवर्षारम्भमहोत्सवे अस्माभिर्दत्तामामन्त्रणां बहुसंमान्य, आवश्यकानि सकलानि कार्याणि पार्श्वतः अपसार्य, समये उपस्थिताः सभामिमामलङ्कृत्य गीर्वा-

णवाण्यां यन्निरतिशयं प्रेमाणमाविरकुर्वन् श्रीमन्तः, तत्कृते नितान्तं कृतज्ञतामुद्वहन्तो वयं सादरं सप्रेम च स्वागतं विधातुं नितरां सन्तुष्यामः। सर्वतो नैराश्यान्धकारे प्रसृते, प्राज्ञम्मन्यानामुलूकानाम् औदासीन्य-विद्वेषपूरितकटुवचनघूत्कारे तत्र तत्र भयमुपजनयत्यपि साम्प्रतं श्रीमतां संस्कृतभाषायाम् अनुरागारुणरागोदयमन्वीक्ष्य तस्या भाषायाः पुनरपि समुत्कर्षसूर्योदयः समासन्न इति आशाङ्कुरः समुन्मिषति नश्चेतसि।

कस्या अपि भाषायाः प्रसारः समुन्नतिश्च नियतकालिकपत्रिकामवलम्बत इति जानन्त्येव श्रीमन्तः। मधुरवाणी वर्षषट्कम् अविगणय्य देहायासम्, अनालोच्य विपुलमपि धनव्ययम्, अविचिन्त्य च आत्मनो निष्किञ्चनताम्, किं बहुना अविचार्य च कामपि विपत्तिं केवलं संस्कृतभाषाप्रसारैकबद्धादरा महान्तमायासितवत्यात्मानम्। साम्प्रतं पुनरपि तादृशं भारं निर्वोढुं तादृशं क्लेशं च सोढुं नैव शक्नोति निर्विण्णा। आकाश्मीरादासिंहलं तत्र तत्र विद्वद्भिः सादरं सम्मानिता सञ्चरन्त्यपि, नैतावताऽपि समयेन आत्मनो जीवनमात्रपर्याप्तमपि धनमधिगन्तुमशक्नोदिति तदिदं भारतीयानां लज्जाकरं लाञ्छनास्पदमिति सविषादमाचक्ष्महे।

भारतीयानां संस्कृति-धर्मरक्षणाय संस्कृतभाषोज्जीवनमत्यावश्यकमित्यत्र न कस्यापि विप्रतिपत्तिः। सुरवाणीजीवनाय मधुरवाणीजीवनमपि आवश्यकतया समापतितम्। अतो विरलवाचकाया मधुरवाण्याश्चिरजीवनाय शाश्वतनिधिसङ्ग्रहे प्रवृत्ता वयमिदानीम्। निवेदयितुं प्रमोदते चेतः, यद् मधुरवाण्याः सौभाग्येन केचन उदारा महाभागाः शतं शतं रूप्याणि प्रदाय शाश्वतनिधिसङ्ग्रहकर्मणि अस्मान्नितरां प्रोत्साहितवन्तः। अन्ये वदान्या अपि एवमेव साहाय्यं विधाय भगवत्याः सुरसरस्वत्याः समुन्नतिश्रेयो लभन्तामिति वयं सविनयमभ्यर्थयामः।

समयेऽस्मिन् अन्यमपि अस्माकमाशयमाविष्कर्तुमभिलषामो वयम् यत् कलकत्तामद्रासादिनगरेष्विव बेळगांवनगरेऽपि एको महान् संस्कृतग्रन्थालयः संस्थापनीयः। येन ग्रामे कृमिकीटकैः क्रमेण कवलीक्रियमाणानां तथा

अनभिज्ञैः विक्रीतानां गुडादिवस्तुजातावरणाय उपयुज्यमानानामपूर्वाणां ग्रन्थानां परिरक्षणं भवेत् । किञ्च ज्ञानार्जनलालसानां जनानामभीष्टग्रन्थालाभप्रयुक्तमसौकर्यं परिहृतं भवेत् । एवमाङ्गलशासनान्तर्गते कर्णाटके कुत्राऽपि पूर्वमस्थापितस्य अत एव अत्यावश्यकस्य संस्कृतग्रन्थालयस्य स्थापने महाजना मनोयोगं विदध्युस्तर्हि अचिरादेव सङ्कल्पोऽयं कार्यरूपेण परिणमेदेवेति दृढीयान्नः प्रत्ययः । संस्थापिते च ग्रन्थालये तद्वारैव तन्मुखपत्ररूपेण मधुरवाणी प्रकाशनीयेति अस्माकं गूढोऽयं मनोरथः । तथा अप्रकाशितपुस्तकानां प्रकाशनाय मुद्रणालयएकः, सङ्गृहीतपुस्तकानां स्थापनसौकर्याय स्वायत्तं मन्दिरमेकं चापेक्ष्येते । तानीमानि मनोराज्यानि कुर्वाणा वयं शेखमहम्मदकोटौ न गण्यामहे नूनमिति प्रत्येति चेतः ।

एतादृशविचारप्रवर्तकप्रसङ्गे अस्माकं सौभाग्येन संस्कृतभाषायाः सुदैवेन अस्याः सभासुन्दर्या नितराम् अनुरूप एव वरो लब्ध इति महान्नः प्रमोदः । अद्यतनपरिषदः अध्यक्षमहाभागा असामान्यगुणशालिन इति प्रथितमेव सर्वत्र कर्णाटके समुज्ज्वलंतेषां यशः । तेषाम् 'अनन्तराय' इति नामैवैतेषु विद्यमानान् अलौकिकान् गुणान् प्रख्यापयति । तैः स्वीकृतेषु कार्येषु विघ्नराहित्यं, सद्विनियोगक्षमं धनवत्त्वं, वचनानन्तरं करिष्यमाण शुभकर्मकारित्वं चेत्यमून् गुणान् नामैवैतेषां ज्ञापयति । तद्यथा न विद्यते अन्तरायः यस्मिन्निति, अनन्तरायः । अथवा अनन्ता रायःनाम धनानि वा, अनन्तरं अयः शुभकर्म यस्य इति वा अनन्तराय इति । ईदृक्षानां महाशयानां सभाध्यक्षता मधुरवाण्याः श्रेयोवृद्धिविधायिनी स्यादेवेति महती नः प्रतीतिः । अध्यक्षपदमलङ्कृतवन्तः अमी महानुभावा यथा रूप्यकाणां सहस्रत्रयदानेन कर्णाटकवाणीप्रणयमनितरसाधारणं प्रकटयामासुस्तथैव ततोऽप्यधिकं वा साहाय्यं विधाय सर्वभाषाजलधराणां जीवनदानक्षमसागरायमाणायां भारतवर्षसंस्कृतिसंरक्षणमूलीभूतायां च सुरभारत्यामपि नैसर्गिकं स्नेहमाविष्कुर्युरिति बलवद्विश्वस्य आत्मनो भाषणमुपसंहरामीति शम् ।

# भाषणम्

( मधुरवाणी-गीर्वाणवाग्वर्धिनीसभासप्तमवर्षारम्भवार्षिकमहोत्सवे अध्यक्षपदमलंकृतवताम् श्रीमदनन्तराव असुंडी रिटायर्ड डि० जज्ज महोदयानाम् )

मान्या महाशयाः—

अद्य गीर्वाणवाणीगौरवार्थं मिलितं एतद्विद्वद्वृंदं दृष्ट्वा परमानंदनिर्भरोऽहम्। विद्यार्थिदशायां विद्यालयेष्वेव गीर्वाणभाषापरिचितिरभूत्। तदनन्तरमन्यव्यवसायनिमित्तेन गृहीतराजसेवासक्तस्य स्वभावतः गीर्वाणभाषाभिरुचेरपि मे तदभिवृद्धेरवकाशो न लब्धः। व्यवसायान्तरेपि लब्धावसरो यथाकथंचित् गद्यपद्येषु तथा च सुलभवेदांतादिविषयेषु तत्र तत्र निवेशितमतिरासम्। तथापि यथार्थं ज्ञानकारी व्याकरणविषयः प्रायेणालक्षितो मया। सोहं गीर्वाणभाषायामेव प्रवर्तितव्यस्य विद्वज्जनसम्मेलनस्यास्य अध्यक्षतामुद्दिश्य पृष्टः प्रथमं दोलायमानमतिरभवम्। यतस्तनुर्मे वाग्विभवः। भाषाप्रभुत्वाभावान्नाहं वाक्पटुरिति स्थिरतरभावनाच्च पण्डितवर्योचित एतस्मिन् कर्मणि कातरं मे हृदयम्। तथाप्यस्याः परिषदः कार्यनिर्वाहकाणाम् प्रेमादरैः प्रेरितोहं स्वयमेव गृहमागता श्रीर्नोपेक्षितव्येति मत्वा परमहर्षेण स्वीकृतमेतत् साहसिकं कर्म। एतावत्कालपर्यंतमत्रभवतां विद्वन्मणीनां भाषणश्रवणानन्तरम् मम भाषितं हि अल्पांबुगर्भान्मेघाद् भूमौ पतन्क्षीणसत्वः पर्जन्य इव युष्मभ्यं प्रतिभाति इत्यत्र न मे संदेहः। तथापि गुणैकदृष्टयः प्रकृतिस्मरणभूयिष्ठमिदं भाषणमिति भवद्भिर्गुणग्राहिभिरहमनुग्रहीतव्यः।

वेदकालादारभ्य न केवलानाम् ऋषीणां किंत्वाबालवृद्धानां स्त्री-पुरुषाणां च मातृभाषेति विश्रुतैषा सर्वांगशोभिनी गीर्वाणवाणी। सर्वाण्यपि शास्त्राणि चतुष्षष्ठिकलाः चतुर्दश विद्याश्चामूलं परिज्ञाय गीर्वाणभाषाद्वारेण मुनयो निजज्ञानं प्रकटीकृत्योत्तमोत्तमान् ग्रंथान्निर्माय महान्तमुपकारमकुर्वन्। सैवेयमोजस्विनी गीर्वाणवाणी करालकालवशादन्यसंस्कृतीनां ग्रासो भूत्वा स्तेनापहृतभूषणा वराकी

नारीव अन्यसंस्कृतिप्रभावप्रमुषितगुणा स्थूलमतीनां सामान्यजनानामसुलभा अर्वाचीनविद्याविभूषितानां पदवीधराणां मुखकुहरं पतिता यथाकथंचिद्वर्त-माना कृशा दीना चाक्रंदत्युच्चैः । पाश्चात्यसंस्कृतिमायाजाले निमग्नानाम् भारतीयानां अस्मदार्यसंस्कृतिविषये वर्तमानः अनादरः दिनेदिने गृहेगृहे देशेदेशे वर्धमानदशायामेव वर्तते इति गतार्धशतमानानुभवेन मे दृढा मतिः।एतद् विषये प्रायः मतभेदावसरो नास्तीत्यपि मे मतिः। संस्कृतभाषायाः प्राचीनसंस्कृतेश्च निकट-संबंधः कथं वर्तते तया संस्कृतेः पुनरुद्धरणाय संस्कृतभाषायाः प्रचुरप्रचारः कथमावश्यको ? भवति इत्येतद्विषये कुमार्याः वैदेही विदुष्या अर्थपूर्णं भाषणं भवाद्भिःइदानीमेव श्रुतम्। अनुमोदितमपीति मे विश्वासःभवतामनुज्ञया तद् भाषणा-र्थम् तामहम् अभिनंदामि । इत्थभूते व्यतिकरे लेखनप्रवचनादिभिर्गीर्वाण भारतीसेवायां बद्धपरिकरा अत्र भवतां मासपत्रिका तथा वाग्वर्धिनीसभाच प्रचण्डसूर्यतपेन संतप्ताया लताया जलसेचनमिव नवचैतन्यं प्रकटयतः सुर-भारतीप्रांगणे । अतीवस्तुत्यं चैतत्कार्यम् । मधुरवाण्यांगीकृतमेतादृशं महत्कार्य मल्पेपि काले यथार्थनाम मधुरफऌदायि अभूद् इत्यत्र पर्यालोचनपराणां मधुरवाणीवाचकानां दृढप्रत्ययः संजायते इति मे मतिः । विशालं खलु नव जीवनदात्र्या वाग्वर्धिनीसभाया मधुरवाणी पत्रिकायाश्च क्षेत्रम्। यत्र केवलं दुरव-गाहेषु न्यायवेदांतादिशास्त्रेषु किंतु सामान्यलौकिकविषयेषु तथा साहित्य भागे शृंगारकरुणादिनानारसेषु बद्धपरिकरे दृश्येते । इत्येतयोरुत्तरोत्तरोत्कर्षं दृष्ट्वा नितांतं तुष्यामः ।

एवं सहजमधुरां बालां मधुरवाणीं सुललितकाव्य-गद्य-नाटकादिप्रबं-धैस्तथा प्रौढदुर्गम-न्याय-वेदान्तोपन्यासैश्च सम्यगलंकृत्य विद्वद्जननिकरेषु ताम् चारुसर्वांगीम् प्रदर्शयितुमस्याः संपादकपण्डितप्रवरावहर्निशं प्रयतेते । तथाच कर्नाटकस्थास्तथा भरतभूमेर्दिक्षुविदिक्षु च प्रथितयशसःपाण्डितोत्तमा विद्वांसो विदुष्यश्चाफलाकांक्षिणः केवलं भाषाभिवृद्धिफलाकांक्षिणो नाना रचनालंकारस्रग्भूषणानि स्वकीयकृतीरर्पयंतो नितान्तं सेवाम् प्रकुर्वन्ते । एवं मधुरवाण्यां प्रकटिता प्रबंधास्तत्रतत्र स्थितानां विद्यापीठपण्डितानां

सहृदयतां प्रकटयन्ति। तैः विद्यापीठैश्च एवं सेवां प्रकुर्वन्तो बहवो विद्वद्वर्याः स्वोचितमानविभूषणै विभूषिताः। इत्येतदतिमात्राय संतोषाय कल्पते। एवमस्याः कीर्तिप्रभाऽऽभ्राजितमार्गक्रमणे अद्यतना विद्याविभूषिता युवानो युवत्यश्च सोत्साहं सादरं च पुरत आगत्य विविधासु वाङ्मयशाखासु यथामति स्वकार्यं कृत्वा आद्यानां ऋषीणां कीर्तिशेषाणां सन्मार्ग दर्शकानां चोपकृतिसंस्मरणंहि तेषां कर्तव्यमिति वक्तुकामोऽस्मि।

गताब्दे अस्मिन्नेव नगरे निर्वाहितायाः प्र-सं-साहित्यपरिषदः महोत्सवदर्शनश्रवणानंदसुखम् अनुभवितुम् अपरिहार्यभवतापापनुन्नः अक्षमोऽभवं। तथापि मधुरवाण्यां मधुरमधुरवृत्तांत वाचनेनैव परितुष्टोऽभवम्। अधुना तु वाग्वर्धिनी सभाया व्यवसायः प्रवर्धितो लक्ष्यते। मधुरवाण्या यशोवल्लरी च सर्वासु दिक्षु प्ररूढास्ति। इत्थंभूतेष्वभिनन्दनीयकार्येषु प्रवृत्तेभ्यः कार्यनिर्वाहकेभ्यो गीर्वाण भाषाप्रणयिन उज्ज्वलयशसः श्रीमन्तश्च परमौदार्येण सहृदयं साहाय्यं कुर्युरिति बलवदाशासे। एवं सर्वतः प्रोत्साहिता गीर्वाणवाणी प्रतिदिनं शुक्लेंदुवदभिवर्धमानानातिचिरेणैव कालेनास्मत्पूर्वर्षिभिः प्रतिष्ठितं स्वकीयमत्युच्चतमं स्थानं प्राप्नुयादिति भगवन्तं प्रार्थयामः।

भवद्भिः श्रुतस्य विद्वज्जनभाषितस्य पर्यालोचनं हि अधुनाऽनावश्यकमेव। तेषां वाग्विलासादिगुणाढ्यभाषाश्रवणानंदितचित्तेषु युष्मास्वल्पसत्ववतो मम भाषाणाद्विरमामि। ममाल्पभाषणस्य शान्तश्रवणेन दर्शितादरेभ्यो भवद्भ्यो मम स्नेहमयान्धन्यवादान् सादरं समर्पयामि। तथैवचैतत्सभाम्ऽलकं भवतां संदर्शनानन्दम् प्रापितेभ्यः एतत् सभाकार्यनिर्वाहकेभ्योऽपिमे धन्यवादानर्पयामि। भूयिष्ठांते नम उक्तिं विधेम। नतीरमिताः सपर्ययामः।

# संस्कृतभाषायाः सांस्कृतिकं महत्वम्

अधुना तावदस्माकं संस्कृतेरुन्नतये संस्कृत भाषाया उन्नतेः सम्पत्तिर्नितरामावश्यकीत्यजानानाः प्रायो विरलाः। संस्कृतभाषायाः खलु प्रौढिमा बहुवंशैनतद्विरलसमूहं प्रत्यभवदेव। परमितोऽप्यधिकतमः संस्कृतभाषायाः संस्कृतेः प्रभावस्तदेतद्विरलवृंदं नाममात्रावशिष्टं विदध्यात्। अनया दृष्ट्या संस्कृतभाषायाः महत्वविवरणमेवास्य तात्पर्यम्। एकादाकिलास्माकं संस्कृतिः सर्वा अपि दिशो विजयदुंदुभिनात्मनो मुखरयन्ती समापन्नेत्यसामान्यं प्रभावमित्यत्र बहूनि प्रसिद्धोदाहरणानि वर्तंते खलु इतिहासे। तादृशी संस्कृतिः कारणान्तरवशात् ईदृशीं शोचनीयामवस्थां यत् समासादयत्तदेतत्संस्कृत्यभिमानिनां अतीव लांछनास्पदमेव। अस्माकं संस्कृतेः पुनरुज्जीवनायाभिवृध्यै च मनःपूर्वकं प्रयत्नः प्रत्येकशः स्त्री—पुरुषस्य कर्तव्यकोटिमाटीकते। परसंस्कृतिजटिल जाले समाग्रस्तां गीर्वाणसंस्कृतिं पुनः संचकासय्य तस्याः समुन्नतस्थाने समारोपकेषु दुस्तरकार्येषु भाषाया उन्नतिरपि गरीयः घटकस्थानमासादयति।

प्रायः सर्वेषां भौतिकविषयाणां विकासबीजानि तेषां विपत्त्यवस्थायामेव व्युप्तानीति प्रतिभाति। अस्य याथार्थ्यमस्माभिः संस्कृतेतिहासे सुज्ञातम्। उन्नतशिखरे विराजत्यस्माकंसंस्कृतेर्यशसि पाश्चात्यसंस्कृतेर्हिममारुताः शनैः प्रवातुमारेभिरे। पाश्चात्यानां प्रत्यग्रविचाराः तेषु तेषु विषयेषु कुतूहल बुद्धिं संजागरय्य सर्वाः स्थितीः संकिरेयुः। समारब्धं च संस्कृतिभ्यां द्वाभ्यां संघर्षणाय। जनतायां नवनवा विचारा अपि प्रादुरभवन्। पाश्चात्यसंस्कृतिर्हि आत्मनो नावीन्येन मायाजालमात्मनो जनतायां प्रसारयामास। एवंविधविचारक्रान्तेरान्दोलनंवशंवदायाः जनतायाः विमर्शकबुध्धिः प्रादुरभूत्। गीर्वाणसंस्कृतिस्तेषां वक्रदृष्टिविषयतामापेदे। पाश्चात्यसंस्कृतिना तुलनात्मकदृष्ट्या गवेषणागोचरैषा संस्कृतिः समापद्यत। अस्या विचारक्रान्तेः संघट्टमासाद्स्य व्यवहारसंचारं विहाय मृतभाषेति दिगन्तराले जागद्यते संस्कृतभाषा। मन्दीभूतं चाध्ययनम्। तथापि इतरसामान्य विशिष्टकारणानाम् अपूर्वतया निर्वा-

धितया आत्मनः अस्तित्वं मुहुर्मुहुः प्रबोधयति जनतायाम् ।

आसां संस्कृतीनां संघट्टनेन निस्तेजाः अस्माकं संस्कृतिः निस्तेजस्वितया दृष्टा । तथापि तस्याः म्लानतैव भाविनस्तेजसः प्रद्योतनीति वचनं नातिशयोक्तिमतिसेवते । यतो हि बहवः पाश्चात्यतत्वविचारप्रवर्तका अस्मदीयभाषासंस्कृतिमाहिमानं मनःपूर्वकं प्राशंसन् । अस्मदीयसंस्कृतेः पूज्योदयस्थानानि वेदवेदांगानि जागतिकाखिलसाहित्यसृष्टौ अत्युच्चतमस्थानं समापन्नानि । इह खलु जगति भूतपूर्वासु संस्कृतिषु अनेकविधासु अस्माकं संस्कृतेरेव स्थानं नितरां गरीयः । मानवानामुत्कर्षस्य साधनेषु अनेकेषु घटकेषु अस्मत्संस्कृतेर्महत्वं वर्णनीयतरम् । वेदान्ततत्वज्ञानप्रमुखेषु गहनविषयेषु अस्माकं संस्कृतेः हस्तगतत्वम् सुलभं पश्यामः । एवं सर्वांगीणामभिवृद्धिमवाप्य विजृंभमाणाया अस्माकं संस्कृतेरमूल्यकोशागारं येन पथा सुसंपादं स महान्पन्थाः अस्माकं गीर्वाणभाषैव ।

सा एषा विचारक्रान्तिः न्यूनतां नः व्यंजयन्ती न्यूनतां च विनाश्य संस्कृतेर्नवीनं पन्थानं प्रदर्शयामास । तत्रैकविधं नवचैतन्यं गोचरीभूय अंकुरीभावमासाद्य अनेकमुखाया अभिवृद्धेः पूर्वचिन्हानि सूचयामास । अस्याः विचारक्रान्तेः सन्धिकालो नववैभवस्य बीजानि समारोपयामास । संस्कृतीनां संघर्षणेनास्माकं संस्कृतिः चांचल्यमनासाद्य उन्नतेरात्मनः मार्गं यदद्राक्षीत्तदेतत् शाश्वतिकस्यास्तित्वस्य स्वयं साक्षिभूतम् । अनेन संस्कृतिरस्माकं संघर्षणं प्रत्याख्याय त्रिकालाबाधितैव समवशिष्यते इत्येतदपि सिद्धमेव ।

संस्कृतिभाषयोः मिथः संबंधे गवेषिते संस्कृतिरिव भाषापि पुरातनी इति अवगम्यते । वेदकालस्य संस्कृतेः बाल्यावस्थया साकमेव गीर्वाणभाषापि अभिवृद्धेरारंभमवाप । ततः ब्राह्मणग्रन्था उपनिषदः इत्यादयः प्रबन्धाः सांस्कृतिकदृष्ट्यैव न्यबंधिषत । अनेन संस्कृतेरभिवृद्धिः संस्कृतभाषायां प्रतिबिंबितेति सुलभं ज्ञायते ।

अस्माकं संस्कृतेः दुरवस्थायां संप्रवृत्तायां गीर्वाणभाषाया अपि दुर्दशा प्रारब्धा । परंतु संस्कृतेरनुच्छायेव वर्तमाना भाषा तस्या महिम्नो बलाद् आत्मनः श्रेष्ठतयापि स्वौन्नत्यं स्थित्यन्तरप्रबलप्रभावेषु यथा न भ्रश्येत् तथा दक्षतां प्रादर्शयत । संस्कृत्या लभ्यानि गौरवाणि संस्कृतभाषयापि लभ्यन्ते । तस्मात् संस्कृतभाषाया अभिवृद्धिः संस्कृत्यभिवृद्धेः निष्कंटकः पन्थाः । संस्कृतेरूर्जितावस्थां कामयमानः संस्कृतभाषाया अभिवृद्धिमेव प्रथमं लक्ष्यीकृत्य निसर्गसिद्धां उत्क्रान्ति यदि बलवतीं कुर्यात् तदैव भाषा-संस्कृती द्वे अपि नवजीवनं प्राप्य प्रथमवैभवौन्नत्यादिभ्यः अतिशयितं प्रभावमासाद्य समुज्जंभेतेइति नासंभवदुक्तिकम् । नाप्यतिशयोक्तिः ।

एवमैतिहासिकपर्यालोचनया गीर्वाणभाषासेवां, तदनुसारमेव भारतीयानां सनातनसंस्कृतेः सेवां निर्बाधतया एषा वाग्वर्धिनी सभा तथाच एषा मधुरवाणी पत्रिका उच्चतरं लोकसंग्रहं संपश्यन्त्यौ नित्यशः क्रमशश्च कार्यं कुरुतः इत्येतत् श्लाघनीयतमम् अभिमानास्पदं च । अतः सर्वेपि सहृदयाः स्त्रीपुरुषाः महानुभावाः एतत् कार्यगौरवं अनुलक्ष्य ( विमृश्य ) सुफलानुसंधानहेतुतया हृत्पूर्वकं सहानुभूतिं स्वज्ञानद्रव्यद्वारा दर्शयेयुरिति प्राथ्र्य विरमामि ।

( गी. वा. वर्धिनी मधुरवाणीसप्तमवार्षिकोत्सवसमारंभे कु—वैदेही डंबळ कर्णाटक कॉलेज धारवाड इत्यस्या भाषणम् )

# संस्कृतभाषायाः वर्तमाना परिस्थितिः।

( पण्डित भीमशर्मा हुलिकविः )

को विशेषः पशूनां मनुष्याणां च । ज्ञानं हि तेषामधिको विशेषः । तर्हि नरजन्मसार्थक्यं कथं लभ्यते । ज्ञानाधिगमेन । ज्ञाननिधिस्तु भाषापेटिकायां निगूहितः । अतो भाषाध्ययनमेव ज्ञानप्राप्तेर्मूलमिति सुस्पष्टमेव । सन्त्येवान्यान्यावश्यकानि ज्ञानसम्पादनसाधनानि । किन्तु तेषां सर्वेषामपि

भाषाध्ययनमेव मूलमित्यत्र न काऽपि विप्रतिपत्तिः। एतत्तु कथनं न केवलं संस्कृतभाषां प्रति, किन्तु अर्हत्यनुयोजनं निखिलाभ्योऽपि भाषाभ्यः। संस्कृतभाषा च पुनः सुसंस्कृता प्राचीनतमा शब्दार्थसौंदर्यविवक्षितार्थप्रतिपादनसामर्थ्यसारल्यसरसत्वाद्यनंतानंतगुणपरिपूर्णत्वात्, ज्ञानस्वरूपाणां त्रिकालज्ञानाम् अधिगतभगवत्साक्षात्काराणां देवतुल्यानां वचोऽमृतभरितत्वात् साक्षात् श्रीमद्भगवतो मुखारविन्दविनिस्सृतत्वाच्च देववाणीत्यभिधीयमाना नित्यमेवापूर्वतया नवनवोन्मेषशालितया च भृशं शोभतेतमाम्। भारतवर्षीयाणामस्माकं तु इयमतीव पूज्यतमा। अस्याः सुविशाले साहित्यलोके मन्त्रद्रष्टारः ऋषयः अभिनवजगत्स्रष्टारः कवयः, पाञ्चभौतिकशक्तिवशीकर्तारो विज्ञानिनः, आत्मानात्मविभेदविवेककुशला वेदान्तिनः, अन्ये चानेकसंख्याका विविधव्यावहारिकविषयविवेचनपरग्रन्थनिर्मातारः महात्मानो लेखकाश्च अजरामरतया विलसन्ति। अपरं च न केवलमेषा संस्कृतभाषा प्राचीनसंपत्संकुला, किन्तु अद्यतनानां देशविदेशभाषाध्ययनसंस्कारादिना विविधविचार–तरङ्गितेङ्गितानां विद्वत्प्रवराणामपि हार्दिकव्यक्तीकरणाय एषा सुलभा सुसंपन्ना, सुसमर्था च। एवं येयं संस्कृतभाषा सार्थनाम्नी निरुपमा संस्तूयमाना च महीमण्डलवर्तमानसमस्तसुमनोवृन्दैः सर्वासां प्राचीनार्वाचीनानां समस्तदेशीयानां भाषाणां मूर्ध्नि तिष्ठति।

हन्त भोः कीदृशी वर्तते अवस्था सम्प्रत्यस्याः। यत्र वेदघोषः उच्चैरश्रूयत, यत्रत्यानां बालानामपि संस्कृतज्ञानं संस्कृतांतर्गतवेदान्तादिनिगूढविषयज्ञानं च विलोक्य विदेशीया विदग्धा विस्मिता विमूढाश्चाभवन्, यत्र च संस्कृताध्ययनं मनुष्यतापरिपूर्तये न केवलमत्यावश्यकमित्यमन्यत किन्तु तस्याभावो महता न्यूनत्वेन परिगणितः, अस्मिन्नेव भारतवर्षे सर्वे वयमधुना कथंभूतां पश्यामः संस्कृतभाषामातरम्। वराकीयं माता दीनवदना, मलिनवसना, निरलंकृता, कृशाङ्गी, गन्तुमशक्ता वक्तुमसमर्था, निःसहाया स्वकीयैः परित्यक्ता, परकीयैः परिपीडिता श्वासोच्छ्वासहृदयक्रियामात्रेणैव जीवनं प्रकटीकुर्वन्ती श्रान्ता,

भ्रान्ता, भीता, अवमानिता इत्येतैरल्पैरनेकप्रकारैः शकलीकृता विकलीकृता, सर्वथैव विकृतरूपा परिदृश्यते। ईदृगवस्थापन्नां मातरमेनामवलोक्य गलन्त्यश्रूणि, जायते वेपथुः, परिदूयते मनः, उत्पद्यते लज्जा, संजायते द्वेषः, इष्यते परितो दृष्टिक्षेपणम्, मुखरयति मुखम्, संचलति कर्मप्रवृत्तिः— किंबहुना संचरति काचिदप्यनिर्वचनीया स्फूर्तिः सर्वेष्वप्यङ्गोपाङ्गेषु । अस्तु ।

किंकारणमेतस्या मातुरवनत्याः । किं क्रियते विद्यादानगृहेषु । उपपदधारिभिराधुनिकाचार्यवर्यैः किमध्याप्यते पाठशालासु धर्मदण्डधारिभिर्धर्मप्रवर्तकैः धर्मप्रसारकैश्च किमनुष्ठीयते धर्ममठेषु। अत्र हि विचार्यमाणे–विद्यादानकर्मणि प्रयुक्तासु पाठशालासु महाविद्यालयेषु वा संकृत भाषा नाम मात्रेणैव अधीयते अध्याप्यते । विश्वविद्यालयैः नियुक्ताः परीक्षाः उत्तितीर्षुषु प्रौढेषु विद्यार्थिषु संस्कृतभाषाध्ययनमङ्गीकुर्वाणा अल्पसंख्याका एव । तत्रापि ये केचन संस्कृतभाषाध्येतारः तेषामध्यापनाध्यापनपद्धतिः परीक्षाक्रमः एतत्सर्वमपि अतृप्तिकरम् कश्चित् समयः यदा आंग्लपाठशालासु संस्कृतभाषाध्ययनं विश्वविद्यालयनिाध्यपनार्दपि दुष्करमभवत् छात्रेभ्यः, किंतु अधुना आंग्लपाठशालासु संस्कृतभाषाध्ययनं अभिनयनमात्रमेव नटनमात्रमेव। देशभाषाशालासु तु संस्कृतस्य नामाऽपि न श्रूयते । अवर्तत एकदा देशभाषाशिक्षकशिक्षणालयेषु संस्कृताध्ययनमल्पं वा स्तोकं वा तदप्यधुना निरस्तम्। आंग्लभाषाशिक्षकशिक्षणालयेषु पुनः विद्यार्थिशिक्षकाः अध्यापनस्याभिनयनं कुर्वन्ति। प्राध्यापकाश्च सूत्रधारस्य पात्रं वहान्ति। धर्ममठेषु ये व्यवहरान्ति, ते सर्वे अर्चने, पूजने, स्नाने, पाने, भोजने, समारंभे द्रव्यसंचयने एवमादिषु अन्येष्वेव विविधेषु कार्येषु सुतरां प्रायः व्यापृता दृश्यन्ते। न कोऽपि तत्रत्यः संस्कृताध्ययने तादृशभारं वहति। एतावता सर्वत्रापि संस्कृताध्ययनं शून्यप्रायं, सर्वे जनास्तस्मिन्नुदासीनाश्च ।

इदानीं किं करणीयमत्र । विद्यादानगृहेषु या सुधारणेष्टा तत्संपादन नैवास्मदधीनम् । राजकीयोऽयं विषयोऽधिकारिवर्गायत्तः । धर्ममठीया अपि एतस्मिन्नर्थे राजकीया अधिकारिण इव प्रायः स्वच्छन्दाऽनुवर्तिनः। तस्मात्तत्रत्या

सुधारणा अपि अस्मत्प्रयत्नक्षेत्रबाह्या एव। एतावता किमवशिष्टम् । भवतु तावत्सुधारणा यदा वा तदा वा तासु संस्थासु। अस्मिन्नुत्क्रान्तिसमये व्यक्तिप्रयत्न संधिकप्रयत्नश्चेतावुभावेव मार्गौ सुकरावयेति मे प्रतिभाति। एतयोर्द्वयोः प्रयत्नयोर्द्वे फले इव दृश्येते मधुरवाणी-मासपत्रिका, गीर्वाणवाग्वर्धिनीसभा च। तयोर्जनितारौ सुगृहीतनामधेयौ रामश्रीनिवासाभिधौ पंडिताग्रेसरौ मूर्तिमन्तावेतौ प्रयत्नाविव स्थितौ । तयोस्तु महोपकारः महाननुग्रहः भारतीयेष्वस्मासु कियानिति शब्दतो वर्णनमशक्यमेव । तस्मादायुरारोग्यसंपत्सुसंपन्नमेतदाचार्यद्वयं चिरं जीवतु, तयोरपत्यप्राये मधुरवाणीमासपत्रिका गीर्वाणवाग्वर्धिनी सभा च विशुद्धपक्षीयः चन्द्रमा इव दिने दिने प्रवर्धमाने भवताम्। एतावदेव तयोर्महिमानमुत्कीर्त्य आशास्य च, तथैव सर्वे जनाः अयुक्तमौदासीन्यमचिरादुज्झित्वा संस्कृतभाषामातुः सेवायां बद्धादरा भवन्त्विति चाभ्यर्थ्य, कालाभावेन किमप्यधिकमनुक्त्वा अत्रैव विरम्यते ।

---

मधुरवाणीमासपत्रिकाया गीर्वाणवाग्वर्धिनीसभायाश्च सप्तमाब्दप्रारंभोत्सवसमये सूचितानां केषांचिद्विचाराणां सङ्ग्रहः ।

---

# काव्यलक्षणम्

लेः—पं. काव्यालंकार भूषणं शिवरामशास्त्री शिंत्रे एल् फिस्टन कॉलेज मुंबई

ष. व. ११ अंकादनुवृत्तम्

शब्दार्थयोरन्यतरस्य प्राधान्येऽपि द्वितीयस्मिन्काव्यत्वव्यवहारो लक्षणयोपपद्यतैव। शिवशक्त्योरिव हि शब्दार्थयोरभिन्नरूपता। तदुक्तं वायुपुराणे ' शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा, अर्थस्वरूपमखिलं धत्ते बाले-

न्दुशेखरः ' इति । एतेन; ' सिद्धे शब्दार्थसंबन्धे ' इति वार्तिककारवचनेन; ' तदधीते तद्वेद ' इति पाणिनिसूत्रेण, तत्रस्थेन वेदत्वादेः शब्दार्थोभयवृत्तित्वप्रतिपादकेन भगवतो महाभाष्यकारस्य विवरणेन च सह विरोधान्मम्मटमतखण्डनरभसे ' तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि **शब्दनिष्ठतैवोचिता**' इति वदन्रसगङ्गाधरकारः प्रेक्षावद्भिरुपेक्षणीय एव । उभयविधव्यवहारानुसारिणो मुनित्रयसिद्धान्तस्यैव सर्वेषामादरणीयत्वात् ।

भवतु । प्रकृतमनुसृत्यातः परं निबन्धारम्भे लिखितं स्वकीयं काव्यलक्षणमेव सुपरिष्कृत्य विवृणुमः । **रम्यार्थ-शब्द-रचनाविशेषान्यतमशालिवाक्य-वाक्य-समूहान्यतरत्वं काव्यत्वम्** । एतन्मम लक्षणश्लोकस्य निष्कृष्टं स्वरूपम् । अस्मिन्नर्थशब्दरचनाविशेषाणां रम्यत्वं नाम, लोकोत्तरचमत्कृतिमदाह्लादजनकत्वं ज्ञेयम् । तेन ' चैत्रपुत्रस्ते जातः' एतादृशेष्वाह्लादजनकेषु व्यावहारिकवाक्येषु नातिव्याप्तिः । तेषु हि लोकोत्तरचमत्कृतिजनकत्वं नास्ति । अर्थस्य चमत्कारित्वं; ध्वनिमत्त्वेन, सालंकारत्वसगुणत्वाभ्यां, दोषाणां परिहारेण च भवति । ध्वनिरपि रसाद्यलक्ष्यक्रमव्यङ्ग्यरूपः वस्तुरूपोऽलंकाररूपश्चेति त्रिविधो भवति । रसादिपदेन चात्र शृङ्गारादयो रसाः, रत्यादयः स्थायिभावाः, निर्वेदादयो व्यभिचारिभावाः, रसाभासाः, भावाभासाः, भावशान्ति-भावशबलत्वादीनि च गृह्यन्ते । एषां सविस्तरं वर्णनं मम रसप्रपायां, साहित्यसुधाकराख्यमहाराष्ट्रग्रन्थे च विद्यते । अस्तु, अलंकाराश्चार्थानामुपमारूपकादयो भूरिभेदाः साहित्यग्रन्थेषु विश्रुतास्ततो ज्ञेयाः । वस्तुध्वनयस्तु संख्यातीताः संदर्भगम्या एव । यथासंभवं गुणालंकारनिवेशेन साहित्यशास्त्रोक्तानामपुष्टत्वादीनां दोषाणां परित्यागेन चार्थो रम्यत्वमेति । ध्वनिराहित्ये तु केवलैरुपमाद्यलंकारैरप्यर्थस्य रमणीयता भवति । शब्दस्य रम्यत्वं समानवर्णावृत्त्या, श्लेषेण, पुनरुक्तवदाभासेन, विषयानुगुणवर्णयोजनया च भवति । यथा मदीये श्रीरामस्तोत्रे ' सोमस्वान्तविरामं जगदभिरामं रुचा विजितकामम् । **कामं वितीर्णकामं नामं नामं समाश्रये रामम्** ॥ ' अस्मिन्पद्ये **वृत्त्यनुप्रासश्छेकानुप्रासश्च निबद्धः** । प्राचीन-

ग्रन्थेष्वनयोः शब्दालंकारेषु परिगणनं कृतम्। तथा वयमपीह परिच्छेदक-वैशिष्ट्येन शाब्दचमत्कारानार्थचमत्कृतिमद्भ्यः पृथङ् निर्दिशामः। रचना-विशेषस्य रम्यत्वं क्रमिकानेकवर्णावृत्ति-चातुर्याचिन्त्योत्तरत्ववर्णनिष्ठपद्माद्याकृति-हेतुत्वाद्यैरनेकोपाधिभिर्भवति यथा 'सन्नारीभरणोमायमाराध्य विधुशेखरम्। सन्नारीभरणोऽमायमतस्त्वं पृथिवीं जय'॥ इदं **पादावृत्तियमकम्**। 'करंकुकोककुररकलहंसकरंवितः। सरोजकोमलोद्गार नीरसंतक्कमारुतः'॥ **अयं चतुररचक्रबन्धः**,

'आस्थि नास्ति शिरो नास्ति नास्ति पादद्वयं तथा। नास्ति हस्त-द्वयं गाढमङ्गमालिङ्गति स्वयम्॥ (कञ्चुक) इयं च प्रहेलिकाजातिः। अनयोः प्रकारयोरप्यर्थचित्रसमा बहवो दोषा अलंकारग्रन्थेषु वर्णितास्तत एवावगन्तव्याः। लक्ष्यविस्तरस्तु विदग्धमुखमण्डनरुद्रटालंकार—सरस्वतीकण्ठा-भरण-लक्ष्मीसहस्र-सुभाषितरत्नभाण्डागारादिषु ग्रन्थेषु द्रष्टव्यः। प्रबन्धेन कस्यचिद्रम्यार्थस्य निर्माणे तस्मिन्काव्यलक्षणसमन्वयाय वाक्यसमूहस्यापि लक्षणश्लोके प्रवेशः कृतोऽस्ति। वाक्यत्वावच्छेदेनैव तत्स्वीकारो भवेदिति चेत्स्फुटप्रत्यायनाय प्रपञ्चार्थं वा 'तत्समुदायो वा' इत्येतस्य लक्षणे ग्रहणं ज्ञातव्यम्।

अथेदानीं लक्षणश्लोकनिर्दिष्टाः काव्यानां पञ्च प्रकारा लिख्यन्ते। यत्र पूर्वोक्तस्य त्रिरूपव्यङ्ग्यार्थस्यैव प्राधान्यं स उत्तमः **प्रथमश्च काव्यप्रकारः**। यथा मदीये रत्नकोषे 'गवाक्षच्छिद्रेषु प्रणयभरदत्तेक्षणयुगा चलापाङ्गा द्रष्टुं प्रियवदनचन्द्रं व्यवसिता। तदैवाये दृष्टिः क नु तव रतेत्यालिगदितं निशम्या-भूद्बाला पुलकितकपोला नतमुखी॥ १॥ अत्र विभावादिभिः प्राधान्येन लज्जाभावो व्यज्यते। विद्यमानापि रतिः प्रणयभरेति पदेन स्फुटतां नीतेति नास्याः प्राधान्यम्। अस्तु,

यस्मिकाव्ये व्यङ्ग्योऽर्थो गुणीभूयावतिष्ठते **स द्वितीयः काव्यप्रकारः**। यथा, 'राघवविरहज्वालासंतापितसह्यशैलशिखरेषु। शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय'॥ २॥ एतस्मिन्नत्युत्तमतमार्थपदे, हंनूमते कपयः

कुप्यन्तीति वाच्यार्थस्योपपादकत्वेन, 'सीताकुशलवार्ताकथनेन राघवः शिशिरीकृतस्तेन चोष्माभावात्कपीनां सुखशयनं नष्टम्' एतद्व्यङ्ग्यं चारुतममपि गुणीभूतम्। एवमेव पर्यायोक्त-समासोक्तयादिष्वर्थालंकारेष्वपि गुणीभूतव्यङ्ग्यवत्त्वेन द्वितीय एव काव्यप्रकारो ज्ञातव्यः।

यत्र व्यङ्ग्यचमत्कृतिहीनार्थचमत्कृतिरेवासौ तृतीयः काव्यभेदः सचोपमारूपकाद्यनेकार्थालंकारस्वरूपः यथा 'विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम्। ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥' अत्रोत्प्रेक्षालंकार एव चारुताहेतुः। ईदृशेष्वलंकारप्रधानेषु काव्येषु कचिद्विद्यमानोऽपि ध्वनिलेशोऽसत्प्राय एव मन्तव्यः। सर्वेष्वपि हि वाक्येषु तादृशक्षुद्रतमव्यङ्ग्यस्य संभवात् यत्र ध्वनिरल्पविचारेणैव स्फुटं प्रतीयेत तत्रैव ध्वनिस्वीकरणमुचितं मन्तव्यम्। अस्त्वेतत्।

यत्रार्थचमत्कारोपस्कृतस्य शाब्दचमत्कारस्यैवप्राधान्यं स **चतुर्थः काव्यभेदः** यथार्थचमत्कृतिहीनायाः केवलशब्दरचनाचमत्कृतेरेव प्राधान्यं सच **पञ्चमः प्रकारः**। अनयोः प्रभेदयोरुदाहरणानि यमकादीनि प्रागेव दत्तानि। पञ्चविधानामपि काव्यानां सप्रपञ्चान्युदाहरणान्यलंकारशास्त्रग्रन्थेभ्योऽवगन्तव्यानि। एषु पञ्चसु काव्यप्रकारेषु तृतीयोऽर्थचित्रनाम्ना चतुर्थपञ्चमौच शब्दचित्रनाम्ना प्राचीनग्रन्थेषु निर्दिष्टौ। द्वितीयस्तु गुणीभूतव्यङ्ग्यनाम्ना मध्यमकाव्यनाम्ना वा व्यवह्रियते। बहुषु स्थलेष्वेतेषां संमिश्रत्वमप्यस्ति। यथा द्वितीय-तृतीययोः समासोक्तयादिषु। तत्रावच्छेदकप्राधान्येन प्रकारविनिर्णयः क्रियत इति ध्येयम्।

ननु 'तदेत्काव्यान्तर्गडुभूतम, अव्यङ्ग्यं त्ववरं स्मृतम्, तत्पञ्चममधमाधमम्' इत्यादिशब्दैः कैश्चित्प्राचीनपण्डितैर्निन्दितानां पद्यानां काव्यत्वापादने कस्तवाग्रह इतिचेन्महाकविदण्डयादिशास्त्रकारसंप्रदायसिद्धकाव्यत्वानां पद्मबन्धयमकादीनां काव्यविषयान्निर्वासने कस्तवापि दुराग्रह इति वद। न तेषु ध्वन्यर्थालंकारवद्रमणीयत्वमिति चेत्सत्यम। नहि सर्वत्र समानमेव रमणीयत्वं वर्तते। तथा सर्वमेव सर्वदा सर्वेषां प्रियम् अत एवाहुर्भिन्नरुचिर्हि

( पंचषष्ठिपत्रे द्रष्टव्यम् )

श्रीमाननीयस्य श्रीमतो एम्–पी–वाली एम्–ए महाभागस्य :

# समभिनन्दनम्

ले —श्रीहूलिमैहन्मठाध्यक्षाः श्रीनीलकण्ठशिवाचार्याः ।

अस्ति प्रशस्तविभवाश्रितः समस्तबंधुजनसम्मानितः, बेलगांवमण्डलाश्रितलोकल्बोर्डचीफआफीसरपदालंकृतः वालीवंशावतंसः डाक्टरप्रभुनामतमहाभागस्य सत्पुत्रः सच्चरित्रश्च श्रीमान् मल्लेशाभिधो बुधः ।

यः किल सततपरिषेवित—सुरसरस्वतीचरणारविन्दमकरन्दमत्तमधुकरायमाणः बेलगांवनगरे पूर्वप्रवृत्तप्रथमसंस्कृतसाहित्यसम्मेलनसमारम्भावसरे स्वागताध्यक्षकार्यभारसमासदितयशश्चन्द्रिकाधवलीकृतादिशान्तरालः संस्कृतभाषाप्रचारालवालः सुरभारतीचरणसंचरणप्रचरणानुकूलः संस्कृतसाहित्यतरुमूल इव विराजते ।

सोऽयमद्य अयोध्यापत्तनप्रविराजमानैः संस्कृतकार्यालयप्रचालकप्रभुखैः पंण्डितप्रकाण्डैः प्रदत्त " संस्कृतसाहित्यालङ्कार " इति पदवीविभूषितः सर्वेषां विदुषां मनोविनोदं तनुते चिनुते च विविधविबुधादरं. कुरुते हि सुरभारतीचरणसरसिजसेवाप्रचारम्

तमेवं विबुधा वर्णयन्वि

य; संवर्धयते विशालविभवं श्रीवालिवंशाम्बुधिं
य; सर्वासु दिशासु तासु तनुते स्वीयां यशश्चन्द्रिकाम्
यो गीर्वाणशिराश्रयात् कुवलयाल्हादेन संशोभते
सोऽयं सर्वबुधाग्रणीर्विजयते मल्लेशनामा विधुः ॥१॥

यः कर्णाककनीतिरीतिविलसद्विद्याप्रभावान्वितः
यश्चाङ्गलयकलाकलापविभवात् एम्–ए–पदालङ्कृतः
यो गीर्वाणसरस्वतीचरणयोः सेवाफलासादितः
सोऽयं पण्डितमण्डले विजयते श्रीमाल्लनाथो बुधः ॥२॥

सुरनुतसुरभारतीपदाब्जे अनितभक्तिरसार्पणेन नित्यम् ॥
अनुपमतदनुग्रहं समाप्य स जयति सम्प्रति मल्लिनाथसूरिः ॥३॥

विबुधजनसमाजे नैजबुद्धिप्रभावत्
बुधजनबहुमानं प्राप्य तत्प्रीतिभाजः।
अवितुरनिजभक्त्या भारतीसेवयाऽसौ
अहरहरनुयातो मल्लिनाथः स्वसौख्यम् ॥४॥

विद्याप्रभावात् विदुषां वरेण्यः भक्त्या च वाणीभजकाग्रगण्यः ॥
सन्मान्यधीरैः सततं सुमान्यः सोऽयं चिरं जीवतु संवदान्यः ॥

सानंदमभिनन्दामो वालीमल्लेशपाण्डितम् ॥
मन्दास्मितवचोवृन्दबन्धुरानन्दतुन्दिलम् ॥६॥

एवं सत्पदवीप्रतिष्ठितगुणं श्रीमद्बुधाग्रेसरं
गुण्डेरावमहोदयं बुधवरं श्रीवाटवे पाण्डितं ॥
तं साहित्यसुधाकरं च मलगीश्रीवेङ्कटेशं बुधं
सानन्दं ह्यभिनन्दनेन सततं सन्तोषयामो वयम् ॥७॥

जीयादयोध्यासुरभारतीय-
कार्यालयाधिष्ठितसूरिवर्ग
जीयात्तथा तत्पदवीप्रशस्त्या
बुधेन्द्रवर्गोऽनुसृतापवर्गः ॥८॥

इतिशिवम्।

---

# प्राप्ति स्वीकारश्च.

<u>पालीभाषा प्रवेशः</u>

काव्यतीर्थ पालीतीर्थेत्यादिपदवीविभूषिता. पुण्यपत्तनस्थ न्यू इंग्लिशस्कूलसंस्कृताध्यापका ना-वा-तुंगारशास्त्रिमहाभागाः समालोचनार्थ-मस्मत्सविधे जातक संग्रह-पालीसद्रूपावली-धातुरूपावलीभिःसह प्राहिण्वन्। पुस्तमदकम् वयमिमानि सम्यगालोच्य पालीभाषाप्रवेश मग्रिमांके यथावसरं विमर्श- पदवीमुपनेष्याम इत्याशास्य श्रीतुंगार शास्त्रिणो महाभागान् समभि।

# – महाकविः कालिदासः –

( चरितं काव्य-विवेचनं च )

प्रो. के ना. वाटवे पुणे एस. पी. कॉलेज.

अयिभोः कालिदास-काव्य-रसिकाः,

मुम्बापुरी नभोवाणीकेन्द्रात् अद्य खलु प्रथममेव निःसृता संस्कृत-वाणी भवतां श्रवणपथम् अवतरति । इयं दिव्या गीर्वाणभारती सर्वासां भाषणां मुख्या मधुराषाच ! कालिदासोऽपि कविकुलगुरुः कविषु मुख्यः, मधुराणि च अस्य काव्यानि । अतः एतादृशी प्रमुखा भाषा एवंविधं कविश्रेष्ठं वर्णयितुमद्य प्रवर्तते इति खलु प्रमोदकरः तुल्यगुणयोः अयं रमणीयः समागमः ॥

परं भारतभूललामभूतोऽयं महाकविः भारतवर्षस्य कं भूभाग स्वजन्मना समलंचकार: काऽस्य धन्या जननी: को वा एतादृश-पुत्र-लाभेन फलितजन्मान्तरसुकृतकती पिता: का नाम अस्य कल्याणिनी धर्मपत्नी, के पुत्राः, के सम्बंधिनः के सहचराः, कस्मिन् शतके कस्य राज्ञः राजसभामयं व्यभूषयत् : किं विक्रमादित्यस्य, उत अग्निमित्रस्य, आहोस्वित् चन्द्रगुप्तस्य उताहो भोजस्य इति हन्त निश्चयेन प्रतिपादयितुं न शक्यते ।

अतिप्राचीनतमत्वात् तस्य कालस्य विविधमतजटिलोऽयं विषयः । नास्मिन् ऐकमत्यं अद्यापि संशोधकानाम् । तथापि महामहोपाध्यायैः मिराशी महामागैः स्वकीये 'कालिदास' ग्रन्थे कालिदासस्य कालविषये प्रमाणपुरःसरं यत् प्रतिपादितं तदेव युक्ततरं भाति । तन्मते महाकविः कालिदासः खिस्तोत्तरचतुर्थशतके द्वितीयचन्द्रगुप्तस्य गृहीत-विक्रमादित्य-बिरुदस्य सभायां उज्जयिन्यां राजकविर्बभूव । अस्य चन्द्रगुप्तसम्राजः विदर्भदशीयः राजपुत्रो वाकाटकः द्वितीयो रुद्रसेनः जामाता । तस्मिन् मृते स्वनप्तृणां क्षेमसंपादनाय चन्द्रगुप्तेन ये केचन प्रेषिता अधिकारिणः

तन्मध्ये कालिदासोऽप्यासीत् । तत्र गतेनैव कालिदासेन विरचितं मेघदूताख्यं खण्डकाव्यम् । तथा च चन्द्रगुप्तस्य कन्यायाः प्रभावती गुप्तायाः विवाहसमये लिखितं 'मालविकाग्निमित्रं' नाम प्रथमं नाटकम् । गुप्तनृपालानां राज्य मतिसमृद्धम्; द्वितीयचंद्रगुप्तेन कृतो दिग्विजयः, तस्य पुत्रस्य नामापि कुमारगुप्त इति आसीत् । अस्य नामधेयमाभिसंधाय कालिदासेन प्रणीतं स्यात् 'कुमारसंभवाख्यं' महाकाव्यं । दिलीप-रघु-प्रभृतीनां 'रघुवंशकाव्ये वर्णितानां नृपश्रेष्ठानां चरित्रवर्णनेन, दिग्विजयोल्लेखेन दैव्य संपदा च गुप्तनृपालानां ते ते विशेषाः स्मारिता भवन्तु इति हेतोरेव प्रणीतं स्यात् कालिदासेन 'रघुवंशाख्यमपरं महाकाव्यम् । विक्रमोर्वशीयेऽपि यः विक्रम-शब्दोल्लेखः कालिदासेन पुनः पुनः क्रियते सोऽपि अनया एव रीत्या घटते ।

कालिदासजीवनविषयकं एतदेव उपलभ्यते । समभ्यधिके तु केवलम् काश्चन आख्यायिकाः कथाश्च समवलम्बनीयाः ताः सर्वा रमणीया अपि अनैतिहासिकत्वात् विश्वासलेशमपि नार्हन्ति । तासां मध्यात् काश्चन 'भोजप्रबन्धे' अन्येषु च स्थलेषु समुपलभ्यंते । जिज्ञासोपशमार्थं तासां एकैव अत्र समुल्लिख्यते । सा यथाः-

कालिदासः किल कस्यापि निर्धनस्य ब्राह्मणस्य पुत्रः । तं शिशु मेव एकाकिन् अशरणं च विहाय तस्य पितरौ दिवंगतौ । असौ रूपगुणसंयुतो ब्राह्मणशिशुः केनापि वृद्धगोपेन सञ्जातानुकम्पेन परिपालितः । प्रज्ञाबानपि गोपशिशुभिः सहसंगतोऽयं कालिदासो विद्यापराङ्मुखः संजज्ञे । अथैकदा कश्चन राजामात्यः राजकन्यायां बद्धवैरः तस्याः कृते शोभनाकृतिं किन्तु मूढमतिं वरमन्वेष्टुं प्रास्थितः। तेन अरण्ये परिभ्रमन्दृष्टः कालिदासः । कमपि कपटप्रबंधं विरच्य तेनअमात्येन राजकन्याया उद्वाहः कालिदासेन सह कारितः। अथ विवाहादूर्ध्वं संमिलितौ तौ दम्पती ।



( क्रमशः )

षष्ठितमपत्रतोऽनुवृत्तम्

लोक इति । सन्ति च तादृशानामपि काव्यप्रकाराणामभिमानिनः संप्रदायप्रसिद्धा महाकवयोऽपि । महाकाव्यमध्यपठितानां तादृशपद्यानां 'तन्मध्यपठितस्तद्ग्रहणेन गृह्यते' इति वैयाकरणप्रसिद्धन्यायेन, प्रबन्धरसेनैव रसवत्त्वमिति भणनं तु वृथा वाग्जालमेव । पूर्वापरसंदर्भमजानानोऽपि नरः, 'चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः । चचार रुचिरश्चारु चारैराचारचञ्चुरः' इति द्व्यक्षरं पद्यं श्रुत्वैव चमत्कारं नानुभवति किम् ? । अनुभवति चेत्कथमत्र प्रबन्धरसेनैव रसवत्त्वम् ।। श्रवणमात्रकृतः प्रतीतिसिद्धश्चमत्कारो न केनाप्यपन्होतुं शक्यः । किञ्च काव्यमन्दिरान्तरेनं प्रकारं सिंहासने निवेशयेति न ब्रूमः । किन्तु तस्य द्वारसमीपवासोऽपि नाङ्गीक्रियत एतन्न क्षम्यते । अपिच नहि सर्वः सर्वदा सकलदृष्ट्या रम्यं भवति । शिष्टसंमता अपि प्राचीनकाव्यप्रकारा आधुनिकेभ्यः केभ्यश्चिन्न रोचन्ते । तदाह काव्यप्रकाशविज्ञापने महेशचन्द्रन्यायरत्नाख्यो वङ्गपण्डितः 'प्रायः संस्कृतकवीनामेष महान्दोषो यत्सर्वत्रैव शृङ्गाररसमेव व्यवहर्तुमीहन्ते स्म । किमाधिकं मङ्गलमाचरन्तोऽपि देवविषयकमेव शृङ्गाररसमवर्णयन्' इति । ज्ञानेश्वरादयो महाराष्ट्रकवयः प्रायः शान्तरसमयीमेव कवितां निरमिमतेति पूर्वस्मान्मताद्विरुद्धं च बहवः साम्प्रातिका महाराष्ट्रीयविद्वांसः प्रत्यवतिष्ठन्ते । तस्माद्रम्यत्वमनैकान्तिकमिति सिध्यति । उक्तंच 'दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव । तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।' इति । ग्रन्थकृता तु सामान्यलक्षणं व्यक्तिविशेषदृष्टिमगणयित्वैव कर्तव्यम् । तस्मात्प्राचीनकविपरंपरानुगुणं यमक–पद्मबन्धादि सकलकाव्यविस्तरावगाहि निबन्धशीर्षकोपनिबद्धमभिनवकाव्यलक्षणमेवास्माकमभिमतम् ।

प्राचीनानां लक्षणानि यद्यपि तेषां व्याख्यादर्शनेन नैतदनुकूलानि । तथापि यौगिकार्थैरेवं शोभनरीत्या योजयितुं शक्यान्येव । तथाहि । 'काव्यं ग्राह्यमलंकारात् । सौन्दर्यमलंकारः । सदोष–गुणालंकारहानादानाभ्याम्' इति वामनप्रणीतानि काव्यालंकारसूत्राणि वर्तन्ते । अत्रालंकारशब्देन सौन्दर्यं नाम

रम्यत्वमेवोच्यते । तच्च सौन्दर्यं दोषाणां त्यागेन गुणालंकाराणां स्वीकारेण च संभवतीति सूत्रार्थः । तस्मात्सौन्दर्यार्थकालंकारपदवान्ति लक्षणानि रम्यत्ववाचकत्वेनास्मदीयलक्षणस्याविरुद्धानि कर्तुं शक्यानि । एवमेव रस्यते नामास्वाद्यते चर्वणाविषयो भवति स रसः, इति रसशब्दस्य व्युत्पत्त्या, चमत्कृतिजनको रस–ध्वनि–शब्दविशेष रचनादिरूपोऽर्थ एव रसपदेन ग्राह्यः । नतु केवलं शृङ्गारादिरेव रसः । तथा स्वीकारेऽनन्तानां कविपद्यानामकाव्यत्वापत्तिरिति प्रागेव विवृतम् । दर्पणमतं दूषयन्रसगङ्गाधरकारोऽप्यस्मिन्नर्थेऽस्माकमनुकूल एव । तस्माद्रसनीयत्वेन रसो नाम रमणीयोऽर्थादिः पदार्थ एव ग्राह्यः । शब्दोऽपि रसविषयत्वेन नाम प्रीतिविषयत्वेन चमत्कारहेतुः । 'गुणे रागे द्रवे रसः' इति ह्यमरः । एवं रसपदभाञ्जि शौद्धोदनि–विश्वनाथादीनां काव्यलक्षणान्यपि कथंचिदस्मदनुकूलतया योजनीयानि । तेषां च विरुद्धत्वेऽपि कविपरंपरादिप्रमाणप्रबला वयं न बिभीमः । किंतु सुकुमारमतीनां श्रद्धाजडानां विद्यार्थिनामपि समाधानायैतल्लिख्यते । 'इष्टार्थोपेता पदावली काव्यम्' इत्याचार्यदण्डिकृते लक्षणे, इष्टपदं रम्यार्थकं मन्तव्यम् । 'रमणीयार्थप्रतिपादकशब्दः काव्यम' इति जगन्नाथीयकाव्यलक्षणे तु रमणीयपदं चमत्कृतिजनकताबोधकं साक्षादेवोपात्तमस्ति । उभयत्राप्यर्थपदस्य वस्तुवाचकत्वाङ्गीकारेण ( अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु इत्यमरः), शब्द–रचनाविशेषयोरपीष्टार्थत्वेन ग्रहणं शक्यमेव । दण्डिलक्षणे पदावल्यपि वाक्यस्यैवोपलक्षिका अन्यथाऽनन्वितैः तदैरिष्टार्थोपेतता कथं संभवेत् ? । आकाङ्क्षायोग्यतासन्निधिबलेन कचिदेकस्मिन्नर्थे पर्यवसितानि पदान्येव हि वाक्यशब्देनाभिधीयन्ते तस्माद् 'रम्यार्थ–शब्द–रचनाविशेषान्यतमशालिवाक्यवाक्यसमूहान्यतरत्वं काव्यत्वम्' इत्येतदव्याप्त्यतिव्याप्त्यादिदोषरहितं सकलविषयसंग्राहकं काव्यलक्षणमिति सिद्धम ।

( विद्यार्थिलेखः )

# कालिदासनिवेदितो राजधर्मः

( ले. रमेशशर्मा चिंतामणराव हायस्कूल शहापूर )

केऽपि कुतूहलप्रेरिता जिज्ञासवो लिपिग्रहणेन संस्कृतवाङ्मयसागरं नदीमुखेन समुद्रमिवाविशान्ति । तत्र गीर्वाणवागब्धौ ते सहजसौंदर्यसुरम्यं फलपुष्पतोयसमृद्धं कालिदासकृतकृतिद्वीपं प्रामुख्येन दीप्तिमन्तं पश्यन्ति । तस्मिन्द्वीपे कालिदासकाव्यकुसुमामोदिततर्पितवैतालिकभ्रमरा एव द्वीपवासिनः । कालिदास एव वर्ण्यविषयो यस्य दीयमानं यशः तत्र सर्वत्र श्रूयते। ललितपद्यानि सुगन्धितकुसुमानि फलानि च सरसानि सुभाषितानि । करुणवीरगंभीररसाः पेयरसा, विविधरसपूर्णाः काव्यपरिच्छेदाश्च जलाशयाः । नाटकानि फलभारनतवृक्षपूर्णान्युद्यानानि, यत्र रसिका रमन्ते, यत्र च लघुकाव्यकृतयः पुष्पवत्यो लताः ।

एतच्चित्रं दृष्ट्वा यदा ते कुतुहलपूर्णमानसा जिज्ञासवः ' कोऽयं कृती जनयितास्य दिव्यद्वीपस्येति तत्रस्थान्पृच्छन्ति तदाहो चित्रं किं कालिदासनाम श्रुतमिति विस्फारितनेत्रा द्वीपस्थाः तान्प्रतिवदान्ति । पुनरपि द्वीपशोभाकृष्टहृदयाः तेऽखिलद्वीपं परिभ्रमन्ति । आगत्य च पृच्छन्त्येकं कदाऽऽसीदसौ कालिदासः, कदा वा तेन निर्मितमिदं द्वीपमिति। कालिदासकालानभिज्ञः स दीर्घमायतं च निश्वस्य दुःखपर्याप्तया गिरा वदति कष्टं नाहं समर्थः नतदुत्तरमुत्तरितुमिति ।

अहो मन्दभाग्याः खलु वयं यत्सरस्वतीभूषणस्य कालिदासस्य जीवितकालं वसतिस्थानं जीवनवृत्तान्तं वा ज्ञातुमक्षमाः । तत्कृतिवचनमस्मचेतासि तत्संबधि कुतूहलमुत्पादयति । कोऽन्वयः तेन स्वजन्मना भूषितः, कौ तस्य पितरौ, का तस्य जन्मभूमिः, के तस्य वयस्याः समकालीना, वा के तस्य जन्ममृत्युतिथी, राजकीयसामाजिकधार्मिकविषयेषु कः तस्याभिप्राय इति प्रश्नशतेनास्मन्मानसं शोकव्याप्तं भवति । किन्तु कुतूहलिनी मानवी बुद्धिर्दुर्दम्यश्च मानवोत्साहः । अतो येन केन प्रकारेण ते स्वेप्सितं लब्धं

प्रयतन्ते। तथा हि ते भिन्नभिन्नकालिदासमतप्रणालीः कालिदासग्रन्थाधारेणान्विष्यन्ति। अहमपि बालबुध्या ताः तर्कयामि। प्रथममहं कालिदासस्य कानि राजकीयमतानीति प्रश्नोत्तरमुत्तरितुं यथाशक्ति कालिदासकाव्यमन्यान्कानपि ग्रन्थांश्चाधार्य लिखितुं प्रयतिष्ये।

मनःकल्पितं राजनीतिशास्त्रमविकृतराज्यशास्त्रशासनानविकृत्य कालिदासः ककुत्स्थयुवराजस्य राज्याधिरोहणप्रसंगे रघुवंशे केषुचित्सर्गेषु वर्णयति। मन्वादिभिर्महाभागैः संस्थापितेयं पुराणसंस्था प्रयत्नतः संरक्षणीयोचितकाले च यथामत्युन्नतिं नेयेति कालिदासमतम्। राजवंश आजन्मशुद्ध आफलोदयकर्मा वर्तेत, धर्मशास्त्रविहितानि यथोचितकर्माणि च यथाविधि कुर्वीदित्यपि कालिदासो मन्यते। आदर्शनृपाः कालिदासमत्या सत्पात्रवन्दारुजनमन्दारा यथायोग्यापराधदण्डनायकाश्च। ते प्रकृतिकल्याणार्थं सदैवावहिता जाग्रति तेषामर्थसंचयः त्यागायैव। ते सत्यरक्षणाय सदाल्पवाचः, केवलविशुद्धकीर्तिप्राप्त्यार्थं चाष्टदिशादिग्विजयं प्राप्नुवन्ति। ते स्वकुलसंतानायैव गृहस्थाश्रमभाजो भवन्ति। बाल्ये तैः शिक्षणमवाप्यते तारुण्ये च ते विषयान्प्रभुञ्जन्ति। पश्चिमे वयसि ते मुनिमार्गगा भवन्ति, स्वेच्छया चान्ते योगबलेन प्राणांस्त्यजन्ति। प्रजानुरञ्जनमेवावश्यकं क्षात्रकर्तव्यमिति कालिदासप्रणीतं महत्तत्त्वम्। तथाहि विशुद्धवृत्तो रामोऽपि प्रजासंतोषार्थं रजककथाविश्वसन्नन्नवांसगर्भां सीतां त्यक्तवान्। राज्ञां करग्रहणं प्रजाभूतय एव। शस्त्रविज्ञानकौशलप्राप्तिरपि नरपालानामाद्यकर्तव्यमेव क्षात्रतेजोरक्षणार्थमिति कालिदासः कथयति। नृपाः कालिदासरीत्या संवृतमन्त्रा गुप्तहृद्गताश्च। धर्ममार्गाश्रिता राजानो ज्ञानिनोऽपि मौनधारिणो बलवन्तोऽपि क्षमावन्तो दातृत्वशूरा अपि निन्दितात्मस्तुतयः। ते सुवृत्ताः क्षमापालाः सामान्यनृपसामान्यदुर्गुणानामदत्तावकाशाः। ते पार्थिवा इन्द्रियाणां संयमे प्रयत्नमातिष्ठन्ति। उक्तं च कालिदासेन रघुवंशस्य नवमसर्गे,

न मृगयाभिरतिर्न दुरोदरम् न च शशिप्रतिमाभरणं मधु।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत्॥१॥

अपरं चाह रघुवंशराजर्षिर्मनुः,

न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ १ ॥

ते पृथिवीपालाः प्रजापितर इव प्रजाःपालयन्ति संधारयन्ति ताभ्यः सुशिक्षणं च ददति । ते धार्मिकान्यतींश्च विशेषेण गोपायन्ति चतुर्वर्णपरंपरां च संवर्धयन्ति । शतक्रतुभूपालयोः संबंध आसीदिति दर्शयति श्लोकोऽसौ,

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ १ ॥

ते प्रजाअन्तकत्रासाद्रक्षन्ति । विश्रम्भस्थैर्नैर्मूलमंत्रिभी राजान उपदेष्टव्याः तेषामुपदेशानुरोधेन ते राज्यशकटानां यथार्थनियन्तारो भवन्तीत्यपि कालिदासेन वर्ण्यते । यथार्थनृपः कालिदासवर्णने नास्त्यतिपरुषहृदयोऽथवा नातिकोमलमनाः । वज्रादपि कठोराणि मृदूनि कुसुमादपि तेषां चेतांसि भवन्ति प्रसंगवशात् । ते विपक्षमित्रपक्षयोः साधारणचित्तभावेन वर्तन्ते । राज्याधिरोहणप्रसंगः कालिदासेनात्मतेजसा सह ब्रह्मतः पवनाग्निसमागम इति कथितः रघुवंशे युवराजः सुशिक्षणप्राप्तेरनन्तरं सिंहासनमारोहति पितुर्जीवितकाल एव । तेन स राज्यनियन्त्रणशिक्षामनुभवं च प्राप्नोति पितृमरणकालस्वीकार्यात्सपूर्णराज्याधिकारग्रहणप्रसगात्पूर्वमेव । ते दिग्विजयेन स्वाधीशतां स्थापयितुं प्रयतन्ते । किन्तु जितनृपाणां समृद्धराज्यानि न गृण्हन्ति । उक्तंच चतुर्थसर्गे,

श्रियं महेन्द्रनाथस्य जहार नतु मेदिनीम् ।

धर्मः प्रभवति कामार्थयोरुपरीति कालिदासवर्णिता नृपा मन्यन्ते । यतो'ऽप्यर्थकामौ तस्यास्तां धर्म एव मनीषिण' इति व्याहृतं कालिदासेन । प्रथमसर्गे कालिदासो 'नृपो विष्णोरंशकावतार' इति वचने विश्वसिति । तत्सत्यमेव । यतः कालिदासचित्रिताः सर्वेऽपि नृपा दिव्यगुणाकराः ।

सुसुंदरं चित्रं चित्रितं कालिदासेन नृपाणाम् । धन्यः कालिदासो भारतवर्षभूषणः । विरमाम्यहं कालिदासोक्त्यैव यस्मिन्नभिज्ञानशाकुंतलनायको दुष्यन्तः स्वविशुद्धकुललक्षणं वर्णयति ।

भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥१॥

# ॥ श्रीकृष्णसुधालहरी ॥

(कविः—पं. रामनाथशास्त्री संस्कृत पण्डितः अमेरिकन् कालेज मथुरा)

पूर्वतोऽनुवृत्तम्

कुचेलं विप्रेन्द्रं बहुलतनयं पुण्यचरितम्
सुशीलाढ्यं पद्मासदयनयनापाङ्गविमुखम् ।
धनप्रेप्सा यातं प्रियसखमुपास्यार्घ्यविधिभिः
गृहीत्वा चेलाग्रात् पृथुकमकरोस्तं बहुधनम् ॥३०॥
निशिस्तेनानीतद्विजसुरभिवृन्दानयकृते
शरादित्साप्राप्तप्रथमजरहःकेलिसदनम् ।
अघोच्छित्यै तीर्थाटननिरतमासादितपुरम्
सुभद्रासोदर्यां कपटयतिमायोजयदहो ॥३१॥
चिरं दृष्ट्वा स्वप्ने कमनमनिरुद्धं प्रमुदिताम्
समानीतं सख्या रहसि रमयन्तीं मुनिगिरा ।
रणे बाणं जित्वा तदवनधुरीणं चगिरिशम्
उषां ज्ञात्वा पौत्रोद्वहनविधये बाणतनयां ॥३२॥
दिशो जित्वा भूरिद्रविणमनुजैः संभृतमहो
चिरं दृष्ट्वा तप्ते हृदि कुरुपतौ तन्मयकृति ।
मखे वृत्ते, धर्मे तव ददति पूजां प्रथमतः
शतं क्षान्त्वा निन्दाःसपदि शिशुपालं त्वमवधीः ।३३।
जिते पत्यौ द्यूते कृतवति पणं स्वानुजवधूः
बलात्कृष्टां केशेष्वपि गुरुसमक्षं हृतपटाम् ।
प्रभो ! रक्ष त्वं मामगतिमिति साक्रन्दवचनाम्
अगोपायः कृष्णामतुलबहुचेलानि वितरन् ॥३४॥
कृतातिथ्ये दुर्योधननृपतिना क्रोधनमुनौ
नियुक्ते भिक्षार्थं द्रुपद[illegible]मुषि वने ।

तया ध्यातो भक्त्या परिमृजितपात्रोदरगतम्
पुलाकं भुक्त्वा त्वं सपदि परितुष्टं तमकरोः ॥३५॥
प्रदातुं राज्यार्धं कुरुनरपतौ नाभ्युपगते
पुनः पंचग्रामानपि वितरितुं दूत्यविधिना ।
प्रयातं त्वां सद्यो नियमयितुमुद्युक्तमनसाम्
महद्रूपं भूमन्नचिरमदद‍र्शः खलु विभो ॥ ३६ ॥
कुरुक्षेत्रे पुण्ये कुरुपतिबले पाण्डवबले
द्वये योद्धुं सज्जे सति समररङ्गे करुणया ।
भृशं दूनं पार्थं स्वजनवधशोकातिभरितम्
ह्युपादिक्षस्तत्त्वं श्रुतिशिखरसिद्धान्तमतुलम् ॥३७॥
न शस्त्रं गृह्णीयामिति शपथयन्तं यदुपते
भवद्भक्तश्चैत् त्वां कथमपि हरे ग्राहय इति ।
वदन् भीष्मो युद्धे त्वयि शरगणान् वर्षति यदा
रथाक्षं धृत्वा त्वं सरभसमरौधीः श्लथवचाः ॥ ३८ ॥
अपारीणे पार्थे प्रधनभुवि योद्धुं स्वगुरुणा
हतश्चाश्वत्थामा—गज इति गिरं धर्मकथिताम् ।
गुरौ ध्माते शंखे श्रुतवति विना तां गजपदं
विसृष्टास्त्रे शोकात् शरपतनमारादघटयः ॥ ३९ ॥
" निहन्यां पुत्रघ्नं दिवसविरतेः पूर्वमथवा
त्यजेयं मे देहं दहन " इति संस्थां कृतवता ।
रवौ चक्रच्छन्ने सति निकटभाजं खलजय-
द्रथं चक्राकर्षात् सपदि विजयेन त्वमवधीः ॥ ४० ॥
वितन्वन् सारथ्यं विजयरथमारुह्य भगवन् !
सकृन्नागास्त्रं तत् प्रहिवति कर्णे रणभुवि ।
अधःकुर्वन् किंचिद्रथमथ किरीटे शिथिलिते
अरक्षस्त्वं रक्षःकुलदमन दक्षः स्वसुहृदम् ॥ ४१ ॥

विदन् धर्मो रक्षत्यमुमिति वदान्यं द्विजमिषा-
दयाचिष्ठाः कर्णं विजयशरविद्धं हृदि रणे ।
मुदा दत्तं तेनोद्धृतशरपदस्यन्दरुधिरैः
अगृह्णस्तद्धर्मं स्वसखजयकामस्तु वरद ! ॥ ४२ ॥
समूलं हन्तुं द्राक् कुरुनृपगिरा पाण्डवकुलम्
क्रुधा द्रौणावस्त्रं विसृजति निशायां यदुवर !
रहस्यानीय त्वं द्रुतमचलदर्यां मुनिमधो
निधायैतान् गूढं सकरुणमरक्षीः स्वशरणान् ॥४३॥
कुलस्येच्छन् वृद्धिं कुलभरण ! पार्थात्मजनुषः
शिशुं सौभद्रयप्रणयदयितागर्भनिलयम् ।
अरक्षोऽश्वत्थामप्रहितदहनास्त्रव्यतिकराद्
रथाङ्गेनावृण्वन् निरवधिकृपाधीनहृदयः ॥४४॥
जरासंधं हन्तुं पवनतनये शक्तिविधुरे
विदीर्णं द्वेधाऽपि प्रसभघटितार्धं तु जरया ।
तृणं हस्ते कृत्वा सपदि विदलय्यापि तरसा
विपर्यासं नीत्वा विदितबल ! संज्ञां व्यधित नः ॥४५॥
प्रवृत्तेऽपि द्वंद्वे प्रबलघनमुष्टिप्रहरणे
मुहुर्गाढैर्घातैः प्रहृतमपि दृष्ट्वा कुरुवृषम् ।
सजीवं खिन्ने सत्यनिलतनये दूनहृदये
स्वयं सन्ताड्योरुं यदुतिलक संज्ञां त्वमददः ॥४६॥
तदा हत्वा दृप्तान् धरणिमकृथाः शङ्करहिताम्
इदानीं किं कालं विगमयसि युक्तेऽवनरण ।
उदासीनः किंवा सुखमुपरि निद्रासि फणिनः
सदा पद्मापद्मप्रतिमकरसंवाहितपदः ? ॥४७॥
यदाक्रान्तं विश्वत्रयमपि भवत्पादतुलितम्
यदुद्भूता पापान् यदुवर पुनीते सुरधुनी ।
यदीयो रेणुस्तां दृषदमपि योषाकृतिमधात्
पदांभोजद्वन्द्वं भवतु मम भद्राय तदिदम् ॥४८॥



प्रश्नोत्तर ... (संपूर्णा)

श्रीशः शरणम्

# प्रसन्नहनूमन्नाटकम्

( ले–पं. वैद्यराज विश्वेश्वरदयालु शर्मा )

पूर्वतोऽनुवृत्तम्

( ततः प्रविशति रामः सुग्रीवेणसह )

रामः ( सखेदं निश्श्वस्य ) सखे सुग्रीव !

बहूनि यातानि दिनानि सीतासम्मार्गणे नैव कृतः प्रयत्नः ।
अतो विषीदाम्यनुशोचितात्मा कालो निरर्थः सकलो गतो मे ॥४८

सुग्रीवः ( सास्रम् )

भ्रातुर्भिया कन्दरलीनदेहः करोमि किं वा परवान् किलाहम् ।
नायाति शापस्य भयेन सोऽत्र स्थानान्तरं गन्तुमहं न शक्तः ॥ ४९
तन्नाशहेतोर्विधिरस्ति कोऽपि विधीयतां येन सुनिर्भयोऽहम्
करोमि कार्यं सकलं त्वदीयं शीघ्रं परिक्रम्य समस्तदिक्षु ॥५९॥

श्रीरामः—

युद्धार्थं कृतनिश्चयो लघुतरं निर्यातु निर्भीर्भवान्
राज्यं पालय लीलया निजमलं विज्ञाय भाग्योदयम् ।
गर्वं तस्य सुखर्वयन्नहमितो विध्यामि त सायकैः
त्वां निर्दुःखमहं करोमि सुखिनं हत्वा रणे वालिनम् ॥ ५१॥

( नेपथ्ये ) इति निर्गतौ

सुग्रीवः—

रेरे ! वानरपामर ! त्वयि भवेदल्पतरा शूरता,
द्रागागच्छ ममग्रतो भज फलं स्वीयस्य दुष्कर्मणः ।
भार्यात्वेन नियुज्य रेऽनुजवधूं हत्वा च राज्यं बलात् ।
शेषे निर्भयमानसो गृहगुहां नायासि किं नो बहिः ॥५२॥

तारा ( रणोन्मुखं वालिनं वीक्ष्य )

प्राणाधिक ! प्रिय ! स्वामिन् ! क्षणं सम्यग्विचारय ।
सुग्रीवस्य निनादे तु रहस्यं किञ्चिदस्ति हि ॥ ५३ ॥

यो भीतो भवतो वनं समभजत्त्यक्त्वा समृद्धं गृहं
युद्धार्थं स सुसज्जितो बलयुतो जल्पत्यनल्पं वचः ।
नो पश्यामि शिवं कुतोऽपि समरे चित्ते प्रकम्पो महान्
मा मा गच्छ विचार्यतां क्षणमिदं शङ्के ह्यनिष्टं महत् ॥ ५४ ॥

वाली—ताराधिपनिभानने ! प्रिये ! तारे ! मा भैषीः, मा भैषीः ।
यो वीरः परिपन्थिनः कलकलं श्रुत्वा गृहान्नो बहि-
र्द्राङ्निर्यात्ययि युद्धकातरहृदा तस्यैव धिग्जीवनम् ।
संरब्धं बलदर्पितं रिपुगणं हत्वा रणे शीघ्रतः
आयास्यामि तवान्तिकं सति ! भज त्वं वीरपत्नीप्रथाम् ॥ ५५ ॥

( इति तारां सन्तर्ज्य रणाय निर्गतः । )

वाली ( इतस्ततोऽवलोक्य )
मिथ्या जल्पति सुग्रीवः किं मे बुद्धेर्विपर्ययः ।
नैवैक्षे सम्मुखे शत्रुं यत्कृतेऽहं समागतः ॥ ५६ ॥

सुग्रीवः ( प्रविश्य क्रोधविस्फुरिताधरः )
रे रे दुष्टजनाग्रणे ! तव रिपुः सुग्रीवनामा महान्
संहारे कृतनिश्चयस्तव पुरः कालोपमस्तिष्ठति ।
यत्किञ्चिन्मनसीप्सितं कुरु लघु प्राणैर्विहीनः पुनर्
मिथ्यातर्कवितर्कयुक्तहृदयो मा भूर्वृथा दुर्ग्रहात् ॥ ५७ ॥

वाली—( सक्रोधं मुष्टिमुद्यम्य ) ओ नीच ! अचिरादेव ज्येष्ठभ्रातुस्ते कृतान्तस्य सदने आतिथ्यभाजं करिष्यामि त्वाम् ।

सुग्रीवः—क्षणादेव पितुस्ते पुरन्दरस्य पुरे वृन्दारकसुन्दरीभिर्मन्दाकिनीवारिविहारिणं नन्दनवनानन्दिनं च विधास्यामि ।

[ इति मिथो युध्यतः । वालिना अधोनिपात्य वक्षः समारुह्य ताडयमानं सुग्रीवं विलोक्य । ]

हनूमान्—( अपटीक्षेपेण श्रीरामेण सह प्रविश्य ) देव देव ! पश्य पश्य । कथं व्याहन्यते वालिना तव सखा सुग्रीवः । भगवन् ! त्रायस्व विपन्नं प्रपन्नं ते सखायं मम स्वामिनम् ।

राम:—नैवं तिष्ठत्यधुना जीवन् वाली । ( इति शरैः प्रहरति )

वाली—( रुधिरमुद्गिरन् )

शासको जगतां राम ! सदा धर्मपरायणः।
अपराधं विना नाथ ! कथं मां हतवानसि ॥५८॥

राम:—धर्मनाशो यदा भूयात् पापाक्रान्ता च मेदिनी ।
अवतीर्य करिष्यामि धर्मसंस्थापनं तदा ॥५९॥
त्वयाऽनुजवधूः कामाद् धर्षिता च रुमा यतः ।
अतस्ते मरणं दण्डं न्याय्यं दातुमिहागमम् ॥६०॥

वाली—त्वया यत्क्रियते नाथ सर्वमेव शुभावहम् ।
यथा ताराङ्गदौ स्यातां सुखिनौ त्वं तथा कुरु ॥

राम:—प्राणाधिकप्रियं ते तनयमङ्गदं यौवराज्ये अभिषेक्ष्यामि ।

( जवनिका निपतति )

दूतः ( आगत्य पारिक्रम्य )

कथं शंसामि तारायै वृत्तं हृदयदारकम् ।
वालिनो निधनं श्रुत्वा साऽवश्यं जीवनं त्यजेत् ॥६१॥

हा किं करोमि । कथं कथयामि । अकथनेऽपि न शुभं पश्यामि ।

महाराज्ञि ! वालिमहाराजः परलोकं गतः ।

तारा—( सम्मूर्छिता चिरात्संज्ञामासाद्य ) किं रे सत्यं वदसि ।

दूतः—सत्यं राजमहिषि ! सत्यं वदामि ।

( रणाङ्गणमुपगत्य भूशायिनं पतिमालिङ्ग्य )

तारा—हा नाथ! अबलां निस्सहायां मां त्यक्त्वा क्व गन्तुमिच्छसि । प्राणाधार! वद वद । दुग्धफेनोपमे स्वच्छे कोमलास्तरणे शयनोचितं ते सुकुमारं शरीरं कर्कशपांशुबहुलमेदिनीस्पर्शं कथं सहते । नाथ ! रुदन्तमङ्गदं दृष्ट्वा प्रेमपूरपूरितेन हृदयेन नतं न तं गाढमालिङ्ग्य कथं समाश्वासयसि कस्माद्वा दोषान्मयि पाषाणहृदयो जातोऽसि, यद्विलपन्तीमपि मां न वदसि नाश्वासयासि च । हा नाथ वद वद ।

मामाभाषसे
मामालपसीति वा

हनुमान् ( सकरुणं ) अयि तारादेवि !

पतिशोकात्परं नास्ति दुःखं जानामि योषिताम् ।
परं धैर्ये धियं धेहि मृत्युर्वै देहिनां ध्रुवम् ॥६२॥
शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे ॥
कश्च कस्यानुशोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे ॥६३॥

शोकं विहाय भीतं विषण्णं म्लानवदनं चाङ्गदं वत्सं प्रेक्षस्व वात्सल्यस्राविणा चक्षुषा ।

सुग्रीवः ( श्रीरामं प्रति )

रुदन्तमङ्गदं दृष्ट्वा तारां च कुररीमिव ।
मोहाच्छन्नमनाः सोऽहं विदीर्णहृदयोऽभवम् ॥६४॥

हा हन्त नाथ ! मया राज्यलोभेन कुलक्षय एवाकारि ।

वालिनीह दिवं याते तारा त्यक्ष्यति जीवितम् ।
स्वर्गतायांतु तारायां नैव स्थास्यति चाङ्गदः ॥६५॥

एतेन कुलक्षयकल्मषात् कथं मुक्तः स्याम् । अतो मामपि मारय मारय येन मुक्तो भवानि कुलघ्नदोषात् ।

रामः ( सकरुणम् ) वीर मा शुचः । मोहं त्यज ।

तारा–( दुःखेन शिरसो लोमानि लुनाना, स्वाङ्गं नखैर्विध्यती ) श्रीराम ! त्वया बली वाली नैव हतः । यतस्तस्यार्धाङ्गी किलाहमवशेषिता जीवामि । मामपि जहि । पणं पूर्णं कुरु ।

रामः–तारे ! जगति को वा हन्ता, कश्च वा हतः । दैवमेवात्र कारणम् ।

शोकं त्यक्त्वा भजस्वाशु सुग्रीवं तेन ते सुखम् ।
अयि सुग्रीव ! सकलां निर्वर्तय पुरःक्रियाम् ॥ ६६ ॥

रामः—लक्ष्मण !

सिंहासने ( इतिगताः सर्वे ) च सुग्रीवं यौवराज्ये तथाऽङ्गदम् ।
अभिषिञ्च ! पुनः सीतान्वेषणं स्मारयन् परम् ॥ ६७ ॥

लक्ष्मणः–यथाज्ञापयति देवः । ( हनूमन्तं प्रति ) सुग्रीवस्य राज्याभिषेकोचितसकलोपकरणसङ्ग्रहाय नियुज्यन्तां वानरप्रमुखाः ।

## उत्पन्नवेदगिरी-इत्युपाव्ह-नागेशशास्त्रिनिधनशोकोद्गारः

सहसा पतितोऽशनिर्महान् ननु कर्णाटकभूमिमण्डले ।
विदुषां महितो महायशा बत नागेश-सुधीर्गतो दिवम् ॥ १ ॥
शतधा प्रविदीर्णमत्रजसा महता शोकभरेण नोऽन्तरम् ।
विधिना खलु वञ्चिता वयं नयता भारतरत्नमुज्ज्वलम् ॥ २ ॥
मधुरा ललिता स्वलंकृता सहजप्रेमविनोदशालिनी ।
विविधार्थविलासिनी कथं भवदुक्तिः श्रुतिगोचरीभवेत् ॥ ३ ॥
विदुषां सकला सभा सखे विकला भाति भृशं त्वयाऽधुना ।
अजनिष्ट, कणादवैखरी विहता, हन्त हता प्रगल्भता ॥ ४ ॥
अपराद्धमिहास्ति निर्घृणांतक ! किं मत्सुहृदा हि ते वद ।
अनयस्त्वममुं बतो वयं सजलाक्षाश्च सगद्गदाः कृताः ॥ ५ ॥
गदितुं प्रभवामि नाधिकं, भजतु स्वर्गसुखं बुधाग्रणीः ।
विकिरत्वनिशं कृपाङ्कुरान् सुरवाण्याममरैः सह स्थितः ॥ ६ ॥

पं. रानडेशास्त्री ( पुणे )

---

## श्रीमन्महाभारत तात्पर्यनिर्णयः

श्रीमन्माध्वसम्प्रदायानुयायिषु सर्वशास्त्रार्थनिर्णयरूपः महाभारतरामायण-हरिवंशादिकथोपबृंहितः सुललितपदविन्यासमनोहरश्चातिपवित्रो महान् ग्रन्थोऽयं सुप्रसिद्ध एव। वाय्वतारभूतैः श्रीमदानन्दतीर्थभगवत्पादाचार्यवर्यैः रचितोऽयं। संस्कृतमजानतां आंग्लभाषाविदुषामुपयोगाय ग्रन्थरहस्यमवबोधयितुं बी. गुरुराजराव बी. ए. बी. एल्. रिटायर सबजज्ज [ मद्रास ] महाभागः मूलश्लोकमुपरि विन्यस्य तदध एव आंग्लभाषाटिप्पणीं नियुज्य ग्रंथरत्नमिदं प्राकाशयत्। अनेन बहूपकृतः तत्वबुभुत्सुः संस्कृतानभिज्ञः परिचिताङ्‌ग्लभाषः श्रीमाध्वसमाज इति सहस्रशो धन्यवादान् प्रयच्छामः। टिप्पणीप्रकाशनसमये परमरहस्यसंभृता श्रीमद्वादिराजपूज्यचरण विरचिता टिप्पणी अपि तत्र तत्र संगृहीता इत्यनेन स्वभावभास्वरं सुवर्णं परिमलभरितमिव परममनोहरं समजनि इति निवेदयितुं महान्तः सन्तोषः। त्रयस्त्रिंशदध्यायेषु नवमाध्यायपर्यंतोयं भागः सुरुचिर-सम्मुद्रणेन सुश्लाक्ष्णमसृणधवलपत्रसंयोजनेन च बाह्यांतरंगसुन्दरतरः प्रेक्षकाणामाल्हादयत्यन्तरंगाणि। रा. ब. व्यंकटेशाचार्य एम्. ए रिटायर टाटा सायन्सइन्स्ट्यूटडॉयरेक्टर महाभागैः सल्लिखितेनोपोद्‌घातेन संवलितं ग्रन्थरत्नमिदं मत्यवश्यं संग्राह्यं तत्वजिज्ञासुभिरित्यभिप्रेमो वयम्। मूल्यम् रुप्यद्वयं

प्राप्तिस्थानम्—श्री. बी. गुरुराजराव बी. ए. बी. एल्. रिटायर सबजज्ज
सरस्वतीनिवास विश्वेश्वरपुरम् बेंगळूर

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्गलमासप्रथमसप्ताहे प्रकाश्यते ।

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः, प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्या अग्रिमप्रदेयं मूल्यं मार्गव्ययसहितं सार्धं रूपकद्वयम् । अंकस्यैकस्याणकचतुष्टयं मूल्यम् । द्वीपांतरवासिनां तु वार्षिकं मूल्यं पंचरूप्यात्मकम् । विना मूल्यमादर्शसंचिका न प्रदीयेत । तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवण्याः श्रेयोभिवृद्धये पञ्चरूपकाणां दातारः सहायकाः दशरूपकदायिनः पोषकाः पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्तः संरक्षका इति व्यपदिश्येरन्

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा विज्ञापनानि समालोचनापेक्षिणो ग्रन्थाः पत्रिकाश्चेत्यादि सकलं **मधुरवाणी कार्यालय बेळगांव** नं १६९८ इति संकेतेन प्रेष्यम् ।

पत्र मूल्यधनं वा प्रेषयाद्भिः; निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्योल्लेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः

**प्राप्तिस्थानम्**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press, Belgaum by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

Regd. No. B. 3664.

जून १९४१.



॥ श्रीशः शरणम् ॥

# मधुरवाणी.

६ वर्षस्य ] १८६३ शके [ ८ अङ्कः



सम्पादकः
गलगली रामाचार्यः
संस्कृतसाहित्यरत्नम्

सहसम्पादकः
बुर्ली श्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

गव्हर्मेंट रजिस्टर्ड

# निलगिरी अर्क.

सर्दी, पडसे,
डोकेंदुखी, ताप,
अजीर्ण,
कॉलरा, खोकला,
संधीवात,
सूज, ठणका व
हवाशुद्धीसाठीं

दर किं. ४ आ.
प्रत्येक
थेंब
गुणाचा
प्रभाव
दाखवितो.

# NILGIRI ARK.

USE FOR

RELIABLE REMEDY FOR COLD, FEVER, COUGH, PLAGUE, CHOLERA, RHEUMATIC PAINS ETC.

## स्टार कंपनी, बेळगांव.

## काष्ठौषधि वनस्पति सङ्ग्रह मार्केट बेळगांव

प्रोप्रायटर, पद्माकर नारायणराव जेरे.

ಆಯುರ್ವೇದೀಯ ಔಷಧಗಳೂ ಹಾಗೂ ತಾಜಾ ವನಸ್ಪತಿಗಳೂ, ಆಯಾ ಕಾಢೆಗಳೂ, ಪುಡಿಕೆಗಳೂ, ಚೂರ್ಣಗಳೂ, ಮತ್ತು ಇತರ ಬೇರೆ ಬೇರೆ ಔಷಧಗಳೂ ಯೋಗ್ಯ ಕಿಮ್ಮತ್ತಿನಲ್ಲಿ ದೊರೆಯುವ ವಿಶ್ವಾಸದ ಮುಖ್ಯ ಸ್ಥಳವೆಂದರೆ ಇದೇ.

ಕಾಷ್ಠೌಷಧಿ ವನಸ್ಪತಿ ಸಂಗ್ರಹ.
ಮಾರ್ಕೆಟ, ಬೆಳಗಾವಿ.

---

**विवाह** केव्हां होईल, स्थळ कोणत्या दर्जाचें मिळेल हें कळवूं. पत्रिका व १ रु. पाठवा.
ज्योतिषि—रघुनाथशास्त्री वाटवे, बेळगांव.

---

# वैद्य आणि डॉक्टर लोकाना सूचना.

आपल्या पेशंटसना, गजकर्ण, खरूज, नायटे वगैरे त्वचारोग असल्यास **गोवा मलम** वापरा. याचा इतका जलद गूण येतो कीं एकाच सप्तकांत याचा अदभूत गूण आपल्या निदर्शनास येईल.

**गूण न आल्यास पैसे परत देण्याचे गॅरंटीनें गोवा मलम विकला जातो.**

बा. किं. ४ आणे.

## स्टार कंपनी, बेळगांव.

# अनुक्रमणिका.


| क्रमांक: | विषया: | लेखका | पृष्ठ |
|---|---|---|---|
| १ | मङ्गलम् | पं. गलगली कुर्माचार्य: | २८१ |
| २ | दीनाक्रन्दनं .... | मलगी वेंकटेशाचार्य: .... | २८२ |
| ३ | गणेशस्तुति: .... | नीलकंठ शिवाचार्य: .... | ,, |
| ४ | धन्यवाद पुरस्सर मभिनंदनम् | सहसंपादक: .... | २८३ |
| ५ | साग्रहमावेदनम् .... | ,, .... | २८४ |
| ६ | वनमाला .... | ,, .... | २८५ |
| ७ | भक्तिरसत्व मुतभावत्वं | श्रीगुण्डेराव हरकारे महाभाग: गद्वाल | २८९ |
| ८ | संस्कृताध्ययन पद्धतौ विद्वन्मतानि | प्रो. हुपरीकर कोल्हापूर .... | २९३ |
| ९ | रक्षणीया सुरभारती | दि. शि. काजरेकर बेळगांव ... | २९७ |
| १० | मधुरवाणी समभिनंदनं | कृष्णस्वाम्यय्यंगार बेंगळूर .... | ३०० |
| ११ | संस्कृतभाषा राष्ट्र भाषा-त्वेन इष्टाऽउतन | शेषाद्री बी. ए. राजेंद्र त्रिचनापल्ली .... | ३०२ |
| १२ | देवानां प्रिय शब्दार्थ विचार: | तटस्थ: .... | ३०५ |
| १३ | महाराष्ट्र संस्कृत विद्यार्थि परिषत् | दा. गो. जोशी कोवाडकर शहापूर .... | ३०९ |
| १४ | प्र. सं. सा. स. परीक्षक समित्यापारिपोषक निर्णय: | सेक्रेटरी .... | ३१३ |
| १५ | श्रीनिवासप्रसादनम् ... | कृष्णमूर्ति शास्त्री मदुरा .... | ३१६ |


---

अग्रिमाङ्के पूरणीया समस्या

## हा हन्त धन्यो युवा ।

पूर्त्यवधिरेतस्या जूनपंचदशतारकपर्यन्त: । एषा पञ्चमी समस्या । एतां परिपूरयन्तु कवयो महाभागा: । मधुरवाण्या: पंचमवर्षारंभे पूरकेभ्य: पदव्यादिप्रदानरूपं पोत्साहनं प्रतिज्ञातमासीदिति स्मरन्त्येव प्रियपाठका: । तदपेक्षमाणास्तु पंचकविता भिन्नार्थका: प्रेषयन्तु । तत्प्रकाशनानन्तरमचिरादेव अर्हद्भ्य: कविवरेभ्य: सम्मानना क्रियेतेत्यलम् ।

—सहसम्पादक:

श्रीशः शरणम्




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुवाणी विजयते ॥

६ वर्षे ] १८६३ शाके ज्येष्ठमासस्य [ ८ सञ्चिका

राधाधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णापटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

---

## मङ्गलम् ।

कविः—श्रीगलगलीकूर्माचार्याः ।

ईशानोऽपि जगत्त्रयस्य भजतां संसारकाराशुचा
माहर्ताऽपि निरन्तरं निरवधिस्वातन्त्र्यभास्वानपि ।
लोकेऽस्मिन् करुणाकरत्वविशदीकाराय हीराङ्गभाः
कारायां स्वयमाविरास रुचिराकार हरिः स श्रिये ॥ १ ॥

धर्मे ध्वंसमुपेयुषि, प्रशिथिले शर्मप्रदे कर्मणि,
मेधाविष्वपि हा श्वपाकपदवीमापादयत्सु स्वयम् ।
कारागारमपि प्रसङ्गवशतो धर्मावनायाऽऽविशेद्
इत्यावेदयितु किमाविरभवत्कारागृहे श्रीपतिः ॥ १ ॥

## दीनाक्रन्दनम् ।

( संस्कृतसाहित्यालङ्कारः पं. मूलगीवेंकटेशाचार्यः )
( बागलकोट, पूर्वतोनुवृत्तम् )

ब्रह्मेन्द्रादिसुरेन्द्रमौलिविलसन्माणिक्यनीराजित
श्रीपादाम्बुजमुद्धतारिगहनप्रोत्सर्पिकाळानलम् ।
सद्भक्तावलिकीर्तिवारिधिशरच्छीतांशुबिम्बोदयम्
वन्दे नन्दतपःफलं गुणनिधिं श्रीवल्लवीवल्लभम् ।१।

नन्दस्त्रीकरपल्लवाग्रकलितं दूरप्रसाराच्छुकं
दुर्ग्राह्यं रभसाद् गृहीतुममलौ हस्तौ प्रसार्य त्वरन् ।
वामाङ्के विनिवेश्य दंशनभिया मात्रा भृशं वारितः
श्रीकृष्णः प्रणतं शुचिस्मितलसद्वक्त्राम्बुजः पातु नः।२।

जृम्भारम्भवशेन मातुरखिलं विश्वं प्रदर्श्यानने
तत्सन्दर्शनविस्मयस्तिमितया मात्रा प्रमात्र्या स्तुतः ।
सद्यः पुत्रमतिं वितत्य स तयोत्सङ्गे कृतो मुग्धया
श्लिष्टश्च श्रुतिगीतचित्रचरितः कृष्णः स पुष्णातु नः।३।

## श्रीगणेशस्तवनम्

कविः—श्रीहूलिनीलकण्ठ शिवाचार्यः

सततसंचलदुन्नतकर्णजानिलविसारिसुगन्धमदाम्बुना ।
परिचरभ्रमरान् परिपोषयन् जयति कोऽप्यहिभूषितकुञ्जरः३
स्वाङ्कद्वयानुपमपीठविराजमाना सिध्द्यर्धिबाहुयुगलावृतनैजकण्ठम् ।
तत्पीवरस्तनयुगोध्दृतहस्तपद्मं वेतण्डतुण्डमनिशं मनसा स्मरामि ॥२।

## गकारवल्लीसम्बद्ध गणेशस्तवनं

गण्यं गाणपतास्पदे शिवपदे मान्यं गिरां दैवतम्
गीष्पत्यादिनुतं गुहाग्रजनुषं गूढात्मबोधाश्रयम् ।
गेयात्मप्रतिभोज्वलं गजमुखं गैर्वाणविद्योदयम्
गोत्रक्षोद्धरणं सदा हृदि भजे गौरीसुतं शाश्वतम् ॥ ३ ॥

# धन्यवादपुरस्सरमभिनन्दनम् ।

श्रीमन्तो महाभागा हावेरीनगरनिवासिनः सदाचारपरायणाः समधीत-सिद्धान्तरहस्यग्रन्था महोदाराः **श्रीकल्लापूरकृष्णाचार्यमहोदया** मधुरवाण्याः श्रेयोभिवृद्धये गीर्वाणवाणीचरणपरिचरणधिया तत्प्रसारकरणाय बद्धादरा मधुरवाण्याः पोषकत्वमंगीकृत्य चास्मान् प्राहर्षयन्निति प्रतिवत्सरं दश रूप्याणि प्रदातुमाश्वासयन्निति च हन्त हृष्यामस्तमाम् । भूस्वर्गायमाणकाश्मीरविषय-विराजज्जम्मूनगरालङ्कार **श्रीरघुनाथसंस्कृतमहाविद्यालयप्रधानाध्यापक-महाभागाः** ( प्रिन्सिपाल ) पञ्चरूप्याणि प्रदाय सहायकतामात्मनः प्रदर्श्य प्राहर्षयन्मधुरवाणीमिति सीमातिगो नः प्रमोदातिशयः । कर्णाटककाश्मीर-योर्महत्यन्तरे वर्तमानेऽपि संस्कृतविषये विद्यमानो गरीयान् आदर एव स्नेहातिरेकं प्रदर्शयति । एवं मधुरवाणी हन्तात्मनो गुणगणगरिम्णा प्रणय-भाजनींजातेति नितान्तं प्रमोमुदीति नश्चेतः । एवमेव सुरभारती सरससाहित्यविद्वन्मणयः सुप्रसिद्धाः श्रीमहालक्ष्मीसन्निधानपवित्रितश्रीकोल्हापूरनगरा-भिजनाः महाराणी ताराबाई टीचर्समहाविद्यालये संस्कृतप्राध्यापकाः **विद्याभूषणश्रीहुपरीकरमहोदयाः** सुरसरस्वतीसंसेवनविशुद्धबुद्धयः सरसगद्यपद्यले-खनकलाकुशला मधुरवाण्यामतिप्रणयिनः श्रेयःकाङ्क्षिणः प्रतिवत्सरं पञ्चरू-प्यकाणां वितरणाश्वासनेन सम्प्रीणयन्तः सहायका अभवन्निति हन्त महान् नः परमानन्दः । विजयपुरनगरनिवासिनो निवृत्तन्यायाधीशपदा महोदारा गीर्वाणवाणीप्रणयिनो मधुरवाण्याः श्रेयोभिवृद्धिमाशंसमानाः श्रीकेंभावीभीमराव-महाभागाः प्रतिवर्षं पञ्चरूप्यवितरणेन अस्मान् प्रोत्साहयन्तः सहायकत्वमंगीकृतवन्त इति नितरां प्रहृष्टाः स्मो वयम् । एवमन्येऽपि तत्रतत्र विद्योतमाना गीर्वाणवाणीप्रणयिनो महाभागा मधुरवाण्या अभिवृद्धिमाकाङ्क्षमाणा अनुग्राहकतां पोषकतां सहायकतां च निरूप्य तदुचितं धनं वर्षयन्तः प्रहर्षयन्तु अस्मानिति समभ्यर्थ्य सम्प्रति पोषकत्वं सहायत्वं चांगीकृतवद्भ्यो महाभागेभ्यः सहस्रशो धन्यवादान् वितीर्य तान् समभिनन्दामस्तमाम् ।

# साग्रहमावेदनम्

मधुरवाणी गीर्वाणवाणीप्रसारणपरायणा अखिलजगद्वाणीत्वमिह समर्थयन्ती काङ्क्षमाणाच काश्मीरादासिंहलं पण्डितवरैः प्रशंसिता षष्ठे वर्षे चाष्टावङ्कान् प्रकाश्य प्राहर्षयत् प्रियपाठकान् इति तु विदितमेव विश्वेषाम् सुसंस्कृतविदुषाम्। तथाप्यद्यावधि वार्षिकं मूल्यं प्रेषयितुमुदासते बहवो महाभागा इति विस्मयाकुलं नश्चेतः। महायुद्धहेतुना कागदादिमहर्घता नितरां भीषयति नः प्रकाशनकर्मोद्यतान्। केचन महोदारा मधुरवाणीगुणगणान् संवर्णयन्तो द्वित्रान् ग्राहकानपि सम्पादयन्तः सहायधनप्रेषणेन प्रोत्साहयन्ति। परं न वयमुपेक्षामहे। कथंकथमपि परिश्रम्य महोदारेभ्यो धनमपेक्षमाणाः यथावत् समुचिते समये प्रकाशयामहे सर्वथा मधुरवाणीमिति प्रतिजानीमहे। परं बहुव्ययसाध्यं प्रकाशनकर्म। धनिनश्च प्रायो गीर्वाणवाण्या नानुरक्ताः। अनुरक्ताश्च न वितरन्ति बहु। एतन्मध्ये भीषणः समरः प्रज्वलन् कागदादिमहर्घतादिहेतुरतितरामेधमानो दृश्यते। सर्वमिदं कारणगणमन्वीक्षमाणेषु कागदादिमहर्घतापरिहारकालं यावत् अस्यास्तु मूल्यवृद्धीकरणं श्रेयसे इति केचिदसूचयन्। तथाऽकुर्वंश्च केचन पत्राधिपाः। परं इदानींतनस्य मूल्यस्यार्पणे समुपेक्षमाणेषु ग्राहकेषु मूल्यवृद्धीकरणमयुक्तमेव सर्वथा इति मत्वा तन्नांगीकुर्म वयम्। पुनमनुकूले समये इतोऽप्यतिशयमितरानुकरणीयामभिवृद्धिं प्रदर्शयामो मधुरवाण्या इत्याश्वासयामहे। एतावता समयेनापि मूल्यमदातृभ्यो महाभागेभ्यः सत्वरं मूल्यप्रेषणाय तथा व्ही. पी. स्वीकरणायच साग्रहं साभिमानं सानन्दं सप्रणयं सविनयं साक्रोशं साक्रन्दनं पुनः पुनरसकृदभ्यर्थयामहेच। तथा मित्रेषु द्वित्राणामपि ग्राहकाणामभिवर्धनाय सम्प्रार्थयामहेच।

---

# वनमाला

आसीद् विलासपुरे श्रीशैलरायो नाम कश्चन महीसुरः। सरससुरभारतीसेवको माध्यमिकशिक्षणं कथंचिदुपलभ्य प्रवेशपरीक्षामुत्तीर्णो बभूव। निष्किंचनतया महाविद्यालये अध्ययनमसाध्यं मन्यमानः कांचनप्रभां कांचन प्रतिभाभास्वरां प्रभावतीं नाम विलासवतीं दयितामुदूह्य वसन् कस्यचन महतो धनधान्यसमृद्धस्य श्रेष्ठिनो वणिज आपणे आयव्ययादिलेखने नियुक्तोऽभूत्। प्रतिमासं हस्तप्राप्येणाल्पेनापि धनेन तुष्टिमान् कालमतिवाहयति स्म।

प्रभावती गुणवती किलापणे परिश्रम्योपनतं प्राणवल्लभं प्रणयातिरेकेण सुमन्दहसितेन च सम्प्रीणयन्ती सुमधुरमधुरं आहारविशेषं परिवेषयन्ती प्रहर्षयन्ती च यथोचितावसरमाशिथिलांगालिङ्गनैस्तत्कृतैरधरसंचुम्बनैरमन्दानन्दनिदानैरवनितलप्राप्तमिव नन्दनवनविहारसुखमुद्भासयन्ती क्षणमिव कालमयापयत्।

एवं प्रवसतोस्तयोरपत्यानि बहूनि समनुवत्सरद्वयमभूवन। तेषु च प्रथमा मन्मथमन्मथाकारा मनोनयनाभिरामा बाला वनमाला नाम। सा च सुललितल[illegible]तैरंगैरतिरुचिरैर्लीलाविशेषैश्च पितरौ प्रहर्षयन्ती वृद्धिमापेदे। विविधासु कलासु प्रावीण्यमुपगता नवयुवतिरियं षोडशवर्षदेशीया प्रवेशपरीक्षायाम्अनुपमं यशः प्राप्य समतोषयदात्मवर्गम्।

समयेनैतावता श्रीशैलरायस्य बभूवुरष्टावपत्यानि। चतस्रः कन्याश्चत्वारः पुत्राश्च। प्रतिमासं हस्तप्राप्यं च वेतनं तावदल्पतयाभिवर्धितमपि नालमभूत् कुटुम्बपरिपोषणाय। तनयानामशनवसनादि कथंचिदपि कल्पयन् प्रबुद्धाया विशुद्धाया बालाया वनमालाया वरान्वेषणकुतूहली समुचितं वरमलभमानः चिंतातांतहृदयो वल्लभया प्रभावत्या सह समालोचनतत्परोऽभूत्।

तत्र तत्र परिचितान् समुचितान् विद्यया विनयेन चालंकृतान् बहून् वनमालाया अर्थे प्रार्थयन् सहस्राधिकां वरदक्षिणाम् अपेक्षन्ते इत्यतो हेतोः दारिद्र्येण तावद्दातुमसमर्थः किंकर्तव्यमूढो रात्रिन्दिवं तच्चिन्तातुरः विगतनिद्र आहारविधुरः कृशतरशरीरोऽभवत्। समयेऽस्मिन्नेव धनिकोऽप्यस्य वाणिज्यव्यव-

हारे लाभाल्पतया श्रीशैलरायस्य मासिके वेतने पंचरूप्यात्मकं धनं न्यूनीकृतवान् । तावद् वनमालायाः सहोदरौ द्वौ वसन्तमाधवौ माध्यमिकशालायां प्रविष्टौ च । शालायामध्यापनार्थे च देयं कुतो धनमिह सम्पादनीयमिति चिन्तया तन्तप्यमानहृदयावभूतां दम्पती । बालापि वनमाला सर्वमिदमवगच्छन्ती विचारपरिप्लुता बभूव । स्वमनसा निर्धारितमेकदा प्रभावत्यै निवेदितवती । तदुक्तमननुमोदमानापि माता शिरःशूलार्तिनिमित्तेन गृहागताय दयिताय हृदयवल्लभाय निवेद्य तदभिप्रायमिह ज्ञातुकामा रामा शयनीयतले तत्समीपे समुपविष्टा अमृतमयैरिव स्वांगुलिदलैस्तल्ललाटमुपस्पृशन्ती समन्दहासं समलपत् ।

अयि हृदयेश्वर, चतुरेयं बाला वनमाला किलैवमालपति " यदत्रांग्लविद्यालये विद्यार्थिनीनामध्यापनाय काचनाध्यापिका समपेक्षिता इति । मयि विशेषतः प्रणयी पितृकल्पः प्रधानाध्यापकः। स चाभ्यार्थितो मां नियोजयेदेव। ततश्च प्राप्येण वेतनेन विशेषतः स्यादानुकूल्यं वसन्तमाधवयोरध्यापने, तथा संसारेऽपीति । अनुरूपवरलाभे उभयकुलानंददायिनी नन्दिनीयं पतिगृहं यास्यतीति नानुमोदते मे चेत । यदि रोचते भवते, तर्हि भवतु किलाध्यापिका वनमाला । यतः प्रधानाध्यापको महाभागः पितृकल्पो बालाया इति ।

अयि प्रभावति यथा नानुमोदते ते चेतः,तथा ममापि । यतः षोडशवर्षवयस्कां वनमालां अध्यापका युवानोऽन्ये दूषयेयुः सर्वथा । प्रधानाध्यापकः पितृकल्पोऽपि सन्तीतरे बहवस्तरुणाः। सुशीलेयं वनमाला बाला। यदि दूषयेयुर्दुष्टास्तर्हि क एनां वृणुते । अर्थो हि कन्या परकीय एवेति यदाह कविकुलगुरुस्तन्न स्मरसि । दिष्ट्या यदि समुपलभ्यते श्रेष्ठो वरस्तर्हि धन्या सा वनमाला वयं च । नगरेऽत्र महति रुग्णचिकित्सालये काचित् सुविद्या समपेक्षिता परिचारिका ( नर्स ) । अतस्तत्र प्रेषयितुमस्मत्प्रियसुहृद् गोवर्धनरायो महाभागो डाक्तरः ( डॉक्टर ) प्रधानो मामावेदयत् । सन्तीदानीं पंचविंशवर्षाधिकवयस्का अपि अविवाहिताः कन्या लोके सहस्रशः । इयं तु केवलं बाला चतुरा च । अल्पेष्वेव मासेषु विद्यावतीमिमां प्रसूतिविद्यानिपुणां विधास्यामीति । परमिदमसमंजसमाकलयामि । यतः विद्या या का वापि

भवतु, संपादिता महोपकारिणी भवति । तथापि वनमाला मे बाला पतिहृदय वल्लभा भवतु इन्तोभयकुलानन्दायिनीति मे मतमित्यवादीत् ।

एतदवसरे प्रतिवेशवर्तिनी रमादेवी सौभाग्यवती प्रतिदिनमिव प्रभावत्या सह संल्लपंती गोष्ठीसुखमनुभावितुमुपागात् । अनिवेद्य वहिःस्थित्वा अविदिता च समशृणोत् श्रीशैलरायस्य भाषणमखिलम् । ततश्च दारिद्र्यचिन्तातान्तयोरतिदुःस्थितिमवबुध्य नितांतमखिद्यत । तदानीमेव बाला वनमालाऽपि समागता रमादेवीति शनैरावेदयन्मात्रे । सलज्जा प्रभावती चोत्थाय सरभसं द्वारदेशमभ्येत्य स्वागतनाम्यनन्दत रमादेवीम् । औपचारिकं भाषणं किंचिदिव समाप्य समन्दहासमविदित्वैवाहमाग मिति भाषमाणा वनमालासविधे वर्तते मे कश्चित् कार्यविशेष इत्यावद्य तया सह बहिर्निरगात् । उपागाच्च सुविशालं विविधमहीरुहसुंदरं नैकलतावलयसंवलितं सुरभिसमीरसंचारपरिशुद्धं नगरवनम् । तत्र सुविमलसलिलमासीत्सरः । तत्तीरे च शिलाखण्डे समुपाविशतां रमावनमाले । अयि अपि भवती रुग्णचिकित्सालये परिचारिका ( नर्स ) बुभूषति ? इत्यपृच्छत रमा वनमालाम् । जठरपिठरपरिपूरणार्थे तथा सहोदर विद्याध्ययनसौकर्यार्थे च परिचारिका वा पाचिका पानीयहारिणी वा या वा का वा भूत्वा कार्यं साधयितुं प्रयतितुमभिलषामि इत्येतावदेवाक्षराणि उच्चार्य बाष्पपूरितनयना बभूव । विमले च सलिले प्रतिबिंबितमात्मनो बिंबाधरसुन्दरं पूर्णिमाचन्द्रप्रतिममकलंकं वदनमपश्यत् तूष्णीम् ।

अयि बाले वनमाले लालनीयरूपावयवे ! लोभनीयलावण्यातिशयशालिनि श्रीमता भाग्यवता नैकजन्मार्जितानन्तसुकृतपरिणामरूपा भोग्या भवती रुग्णाचिकित्सालयेषु परिचरिका वा विद्यालयेषु प्राध्यापिका वा या वा काचिदन्या न भवितु मर्हति सर्वथा । अतो महत्यपि विपत्परंपरासमूहे समापतत्यपि अनाघ्रातपुष्पसदृशी भवती भाग्यवतः श्रीमतो विद्यावतो विनयवतो नवयूनो भोग्यदेवता एव भवितुमर्हति वराप्सरोरूपा इत्यहं मन्ये । यावद् धनमपेक्ष्यते तावदहं समर्पये भवत्यै । इदमेव निवेदयितुमानयमहमत्र नगरवने त्वाम इति वनमालामाश्वासयद्रमादेवी । अनयोः संभाषणमुपश्रुत्य कश्चन तरुणः शनैश्शनैरनुसरन् सः, श्रीशैलरायगृहमुपागच्छत् । अभ्यागतं च

तं तरुणं स्वागतेनाभ्यनन्दत् श्रीशैलरायः । उपविष्टश्च शनैः समन्दहासमभाषत तरुणः " अयि महाभागा अपि विद्यते मे परिचयो भवताम् इति ।"

आम् जाने भवन्तं श्रीमंतं नगरश्रेष्ठिनो कमलाकान्तमहोदयस्यैकमात्रं पुत्रम् विश्वविद्यालयख्यातयशसमुच्चपदवीधरम् लक्ष्मीमनोहरं नाम । श्रीमत्सदृक्षाः शुभागमनेन यन्मदालयमलमकुर्वन् तेन धन्योऽहं प्रहर्षभरितश्च । किंवास्यादागमनकारणमित्यावेदनेन सेवापरिग्रहणेन च कृतार्थीकरणीयोऽयं जन इति सविनयमवादीत्तं तरुणं श्रीशैलरावमहोदयः । महाभाग भवदीयया बालया वनमालया समुपगूढः संसारसुखमनुभवितुमतिमहद् मे कौतूहलम् । नाहमपश्यं जगति विनयवतीं विद्यावतीं विलासवतीमदिशीं युवतिम् । नाहमपेक्षे वरदक्षिणाम् । नाभिलषामि वरोपचारान् । सर्वस्वं महदिह भाग्यमतिरिक्तं मे भगवती वनमाला । अतः अचिरादेव विशालेऽस्मिन् अस्मन्मन्दिरे महता उत्साहेन प्रवर्ततां सुमुहूर्ते विवाहमंगलमहोत्सवः । किमितोपि विशेषनिवेदनेन फलमिति श्रवणामृतस्यंदिभिर्वचोभिरानन्दयत् स तरुणः सर्वान् ।

बहुविजृंभणं प्रावर्तत विवाहमहोत्सवः श्रीमतो विशाले मन्दिरे । लक्ष्मीमनोहरः श्वश्रूश्वशुरौ श्यालादीनप्यहर्षयदतितरां धन्यः । श्रीमान् कमलाकांतमहोदयो वनमालां वधूं लक्ष्मीमनोहरं तनयमपि प्रेक्षमाणः प्रमोदभरपरवशो नातृप्यत् ।

श्रीशैलरायं स्वस्मिन्नेव गृहे आयव्ययलेखनकर्मणि न्ययोजयद् जामाता । पर्याप्तं वेतनं प्रयच्छन् अन्यद् धनं धान्यं वस्त्रपात्रादि च काममर्पयन् सुखमयानकार्षीद्दिवसान् । एवं च वनमाला आत्मनो गुणगणैः संप्रीणयन्ती प्राणेश्वरं प्रमोदगिरिशिखरस्य परां कोटिमधिरुरोहेत्यलम् ।

## तात्पर्यम्

वरदक्षिणापिशाचिकया ग्रस्ता बहवो विषीदंति नितराम् कन्यापितरः । तेन मती हानिरुत्पन्ना समाजे । गुणपक्षपातिनो विरलाः खलु नराः । वनमालाया गुणानवलोक्येव यदि गुणिनो वराः कन्या वृणुयुस्तर्हि सुखं भविष्यतीति सर्वथा गुणपक्षपातिभिर्भाव्यमित्यलं पल्लवितेन ।



सहसम्पादकः

# भक्ते रसत्वमुत भावत्वम् ?

ले. पं. वाचस्पतिः गुण्डेरावहरकारेमहाभागाः डि॥जज्जगद्दाल

पूर्वतोऽनुवृत्तम्



" गोभिः श्रीणीत मत्सरं " " तद्धेदं तर्ह्यव्याकृतमासीदि " त्यादिषु प्रकृतिशब्दस्य विकृतिवाचकत्वं दृष्टम् । एवंरीत्या साधनवाचकस्य फलपरत्वेन व्यवस्थापयद्भिस्तैरेव " नामान्तरेण ब्रह्मविद्यैव भगवद्भक्तिः किं न स्यादिति आशङ्कामुद्भाव्य सर्वापेक्षाधिकरणन्यायेन तां प्रोद्दलय्य स्वरूप साधन–फल–अधिकारिभेदात् भक्तिब्रह्मविद्ययोः वैलक्षण्यं प्रदर्शितम् ।

अत्रेदं बोध्यम् । ब्रह्मविद्यातो भक्तेरात्यन्तिको भेदस्तदैव, यदा " अहं-ब्रह्मास्मि " " तत्त्वमसि " इत्यादि महावाक्यार्थानुसन्धानपूर्वकसर्वानर्थ-मूलाज्ञानप्रहाणाय चित्तद्रवीभावानपेक्षाऽद्वितीयात्ममात्रगोचरनिर्विकल्पमनोवृत्तिः सकलसामाजिकसम्मता अतिरिक्ता सिध्यति । तद्व्यतिरेकेण, अनन्तकल्याण-गुणपरिपूर्णे अज्ञानतमोहारिणि ध्यातॄणां हृदयारविन्दानि निरन्तरवरदाभयहस्त-व्यञ्जितपरमानुग्रहविग्रहगभस्तिभिः समुन्मीलयति भगवति दिनमणौ प्रेमप्रकर्षोज्ज्वला भक्तिः सिद्धा भवति । यैस्तु सर्वेश्वरः निखिलहेयप्रत्यनीकस्वरूपः सत्यसंकल्पः ज्ञानानन्दाद्यनन्तकल्याणगुणपरिपूर्णः सर्वज्ञः सर्वशक्तिः भक्तानुग्रहदीक्षितः एव परं ब्रह्मेति प्रतिपाद्यते, तेषां ब्रह्मविद्यैव भक्तिः, भक्तिब्रह्म-विद्ययोर्न कोऽपि भेदः । तस्मात् भक्तेः भावकरणव्युत्पत्तिप्रदर्शनेन द्वैविध्य-प्रतिपादनं सर्वजनोपादेयत्वेन सम्मतमिति न प्रतीयते । " या निर्वृतिः " " एतावानेव " इत्यादिश्लोकगत निर्वृतिनिश्श्रेयसशब्दाभ्यां परमपुमर्थ एव प्रतिपाद्यते इत्यपि निश्चयेन वक्तुं न शक्यते । अव्यक्तादिशब्दानां स्थूल-शरीरादिबोधकत्व एव " सूक्ष्मं तु तदर्हत्वा"दि त्यादि बादरायणसूत्राणां तात्पर्यमित्यत्राऽपि सर्वेषां सम्मतिः न दृष्टा । " ब्रह्मणो गुणान्तरपूर्तिरिव सर्वशब्दवाच्यताऽपि मुमुक्षुणा ज्ञेया......। किंच, महतः परमव्यक्तमित्यत्रापि

अव्यक्तशब्दस्य अब्रह्मपरत्वे 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्युत्तरवाक्येऽपि तच्छब्देन प्रकृतस्याब्रह्मण एव परामर्शात् अब्रह्मज्ञानादपि मोक्षः स्यादिति सफला अव्यक्तादिशब्दसमन्वयोक्तिरिति तात्पर्यचन्द्रिकायां श्रीव्यासतीर्थैः प्रतिपादितम् । श्रीरामानुजाचार्यैः—

'श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिन् शेमुषी भक्तिरूपा' इति

'श्रीमन्मध्वमते' इति प्रसिद्ध श्लोके—

'मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं' इत्यत्र च स्पष्टतया श्रुत्यैव प्रतिपादनात् सर्वापेक्षाधिकरणन्यायेन सत्कर्मसाध्या भक्तिः मुक्तेः साधनमित्येव फलति । श्रीमच्छङ्कराचार्या अपि "निश्श्रेयसाय........श्रेष्ठस्तु सर्वेषां भक्तिमार्गः" (आचार्यसूक्ति मु.) इति प्रतिपादयन्ति । तस्मात् ब्रह्मविद्याप्रसक्तिः भक्तेः केन वार्यते ?

एवं रूपगोस्वामिभिरुपक्रान्तो मधुररसः यथा श्रृङ्गार एव पर्यवस्यति । तथा मधुसूदनसरस्वतीश्रीपादैरपि प्रतिपादितो भक्तिरसः विषयवैराग्यजनकत्वात् परमानन्दरूपत्वाच्च

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' ॥

इत्युक्तदिशा परिणामतः शान्तरसाद् न भिद्यते । किंच भक्ते रसत्वे तयैव करणव्युत्पत्त्या आत्यन्तिकनिश्श्रेयसप्राप्तिसंभवात उक्तसाध्यव्युत्पत्त्या च तस्या एव परमपुमर्थत्वात् कृत्स्नस्याऽपि ब्रह्ममीमांसाशास्त्रस्य च अनारम्भणीयता प्राप्नोति ।

इदमत्रावश्यमवधानीयम् । आचार्यदण्डिना काव्यादर्शे भावश्रृङ्गारयोः सूक्ष्मो भेदः एवं स्पष्टीकृतः ।

'प्राक्प्रीतिर्दर्शिता सेयं रतिः श्रृङ्गारतां गता ।
रूपबाहुल्ययोगेन'—इति ।

प्राग् इत्यनेन "अद्य या मम गोविन्देति" पूर्वपद्ये या विदुरेण भगवद्विषया परमप्रेमरूपा रतिः दर्शिता, सा विभावाद्यपरिपुष्टैव देवादिविषया रतिः। इयम् इत्यनेन 'मृतेति प्रेत्य संगतु' मिति पद्ये सैवापरिपुष्टा रतिः रूप-बाहुल्ययोगेन रूपस्य रत्यात्मकस्वरूपस्य बाहुल्यविस्तारः विभावानुभावव्यभि-चारिभिरभिव्यक्तिरिति यावत्, तस्य योगेन नाम सम्बन्धेन शृङ्गाररसतां प्राप्ता। एतेन भगवद्विषयिण्यां रतौ साधारणतः सामाजिकस्य सहृदयहृदयस्य तथा अनुरागपरिपोषो न जायते, यथा कान्तादिविषये मनसोऽनुरागपरिपोषो भवति। अस्मिन् श्लोके "सेयं रति" रित्यनेन देवादिविषयकरतिसजातीयैव इयं श्रृंगाररतिरिति स्पष्टं प्रतीयते। परं सा देवादिविषये अपरिपुष्टा। शृङ्गारे तु परिपुष्टा। परिपोषहेतुस्तु साधारणजनताया मनोनुकूलवस्तुलाभ एव। उक्तं च "रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम" इति। तस्मात् देवादि-विषये मनसः परिपोषाभावात् रतिर्भाव एव। शृङ्गारे तु "स्त्रीति नामैव मधुर" मिति न्यायेन सैव रतिः शृङ्गारपोषं पुष्टा॥ "रतिर्देवादिविषया" इति सूत्रस्यापि अयमेवाभिप्रायः। काव्यप्रदीपे गोविन्द ठक्कुरा अपि रतिर्देवादि-विषयेत्यत्र रतिरिति स्थायीभावोपलक्षणं, देवादिविषयेति आप्राप्तरसावस्थो-पलक्षणं, तेन देवादिविषया सर्वा, कान्तदिविषयाअप्यपुष्टा हासादयश्च अप्राप्तरसा-वस्थाः प्राधान्येन व्यञ्जिता व्यभिचारी च भाव इत्यभिधातव्यम्। उक्तं च "रत्यादिश्चेन्निरङ्गः स्याद् देवादिविषयोऽथ वा। अन्याङ्गभावभाग् वा स्यात् न तदा स्थायिशब्दभाक्" इति। रसचान्द्रिकायां—रसत्वं च रत्यादेः स्त्रीपुं-सादिविषयकत्वेन अभिव्यक्तावेव। न तु देवादिविषयकत्वेनाभिव्यक्तौ। तदानीं सहृदयानां रसव्यवहाराभावात्। किंतु भावपदव्यवहार एवेति।

इदं तु बोध्यम। रतिर्देवादिविषयेत्यत्र रतिशब्दस्य भाक्त एव प्रयोगः। शृङ्गाररतेः देवादिविषयकरतौ च मनोवृत्तेरेव भिन्नत्वात्। यथा योगवासिष्ठे।

मनःकृतं कृतं राम न शरीरकृतं कृतम्।
येनैवालिङ्गिता भार्या तेनैवालिङ्गिता सुता॥

अत्र मनोवृत्तिभेदः स्पष्टमेव प्रतीयते।

पुनस्तत्रैव रसचन्द्रिकायाम् वात्सल्यस्नेहभक्त्यादीनाम् अतिरिक्तानां रसानां सत्त्वात् कथं रसा नवैवेत्याशङ्क्य एवं समाहितं—योषिद्विषया रतिः विभावादिमहिम्ना स्वाद्यतामापाद्यमाना श्रृङ्गाररसतां प्रतिपद्यते । पुत्रमित्रगुरुदेवतादिविषया रतिः भावो भवति । एवं विषयभेदेन व्यवस्थितत्वात् वात्सल्यस्नेहभक्त्यादीनां भावशब्दव्यपदेश्यतया रसशब्दव्यपदेश्यत्वं नास्ति । अत एवोक्तं प्रकाशकृता " रतिर्देवादिविषया " इति । तस्मात् वात्सल्यादीनां भावशब्दव्यपदेश्यरत्यात्मकत्वेन तादृशरत्यैव गतार्थत्वात् न तेषामतिरिक्तरसत्वमिति । ननु देवादिविषया रतिः भाव इत्युक्तम् । कोसौ भाव इति चेद् व्यभिचारिभाव इत्यवेहि । कस्य रसस्य व्यभिचारिभाव इति चेद्, वात्सल्यस्नेह—भक्त्यादौ सति करुणहास्यशान्तादीनामेव रसत्वेन रतेस्तद्व्यभिचारिजाया एव युक्तत्वात् । तस्माद् व्यभिचारिण्या रत्यैव गतार्थत्वात् न वात्सल्यादीनाम् अतिरिक्तरसत्वमिति सिद्धं रसो नवविध इति । रसतरङ्गिणीकारा भानुजीभट्टा अप्येवमेवाभिप्रयन्ति ? । किं सर्वेपि साहित्यकारा गड्डरिकाप्रवाहेण साग्रहं भक्तेः भावत्वमेव प्रतिपादयन्ति ? वस्तुतः विचार्यमाणे विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति निर्विवादम् । रामादिष्वपि तत्तद्विशेषमपहाय धीरोदात्तादिसामान्यावभास आवश्यकः । किंच यावदयं रामः, इयं सीता इत्यादिबुद्धिः तावन्न चमत्कारः, औचित्याभावात् । " अनौचित्यादृते नान्यद्रसभङ्गस्य कारणमिति नियमात् । यदा सामान्यतो भानं तदैव रसास्वादः सर्वानुभवसिद्धः । एवं परिहृतविशेषा नायिकानायकादयः यावत् स्थायिनो व्यक्तिरूपचर्वणाविषयतां गतास्तावदेव रसास्वादः । रसस्तु भग्नावरणा चिदेव । तस्मात् सामाजिकस्य सहृदयस्यान्तःकरणावच्छिन्नं चैतन्यमेव प्रमातृ । तस्यैव रत्यादिस्थाय्यवच्छिन्नस्य रसत्वात् चैतन्यांशमादायाभिन्नत्वव्यपदेशः । नायकादिगततत्तद्विशिष्टतव्यक्तित्वभानादेव तन्निवृत्तिः । तन्निवृत्तावेव रसो नष्ट इति प्रतीतिः । यदि भक्तिः रसः स्यात्, तर्हि आलम्बनस्य भगवतः भगवत्त्वेन भानं न स्यात् । श्रृङ्गारादिषु रामादिवत् भक्तिरसेऽपि भगवतः सामान्यतो भाव " अविस्मृतिः कृष्णपदारविन्दयो " रिति भक्तिरेव न स्यात् । (क्रमशः)

# संस्कृताध्यापनपद्धतिविषये विद्वन्मतानि।

संङ्ग्राहकः—हुपरीकरेत्युपाभिधो गणेशशर्मा, एम्.ए. बी. टी; साहित्यभूषणम्,
संस्कृतप्राध्यापकः श्रीम. ता. टीचर्स कॉलेज, कोल्हापुरम्

असावावर्तिवृत्यमानः पुनरर्थग्रहणवस्तुनि संवादपटुमतिक्रामेत्। एवमवस्थितेऽपि सांलापिकी पद्धतिः कञ्चिद्गुणं धारयत्येव। गुणश्चैषः—यदेषा छात्रमनसि मतं द्रढयति यदहं संस्कृतं वक्तुं प्रभुरस्मीति। एतन्मतं संस्कृतभाषाध्ययने छात्रचेतसि आत्मप्रत्ययं धैर्यं च जनयति, येन स कानिचिद् वाक्यानि परिचिततमं वस्त्वधिकृत्य वक्तुं प्रगल्भते। किन्त्वेतत्सामर्थ्यं नित्यपरिचितान् विषयान् वर्जयित्वा नान्यत्र प्रवर्तते। यथा सौदमाङ्ग्लज्ञानं (Butler English) कांश्चिन्नियतविषयानावृत्य तिष्ठति, तान् हित्वाऽन्यत्र न प्रभवति, तथा सांलापिकं ज्ञानं नियतवस्तुविषयमेव जायते। यथा तथा वा भवतु। एतावदपि भाषाप्रभुत्वमसंशयं गुणाय भवति। असौ गुणः पुनर्दोषेणानुबध्यते एव। संलापपद्धतिर्वाक्यस्य संहतेन श्रवणेन कञ्चिदर्थं छात्रमनसि उद्भावयति। न पुनरेषोऽर्थः पदच्छेदं पदस्य रूपाणि, पदानां परस्परान्वयित्वमित्यादीनां ज्ञानमपेक्षते, येन च्छात्रमनो वाक्यविश्लेषपराङ्मुखं भवति। केवलं वाक्यस्य श्रवणमात्रेणार्थग्रहणे प्रवर्तते। एतेन का हानिः? एषा पद्धतिश्चिरमवलम्बिता चेतसा छात्रं स्थूलदर्शिनं जनयति, तस्य चेतसि-विद्यमानं चेत्सूक्ष्मदर्शित्वं न वर्धयति, क्रमेण ह्रासं प्रापयति। पूर्वमेव तदविद्यमानं चेत्, तस्योत्पत्तेः सम्भवमपि चिराय प्रतिबध्नाति। वाक्यश्रवणतन्त्रमर्थग्रहणं विरलव्याकरणास्वाङ्ग्लादिभाषासु कियच्चित्प्रमाणं यावदुपकुर्वदपि, व्याकरणभूयिष्ठायां संस्कृतभाषायां सर्वथा मोघं सम्पद्येत। एषा सूक्ष्मदर्शनविमुखता नरं क्रमेण व्यवहारान्तरेष्वपि शिथिलमतिं जनयेत्। एषा अलघीयसी हानिः। "अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते" अस्याः पङ्क्तेरन्त्यपदस्यार्थः, उच्चारमात्रश्रवणेन सूक्ष्मदर्शितयाऽननुगतेन, छात्रैः "मम कृते, मम कारणात्" इत्यादि क्रियते। एवं सांलापिकी

पद्धतिरुपकारिणी तद्विपरीता च—इत्युभयविधा सत्यपि गुणापेक्षया हानिमेव गरीयसीं जनयेदिति मे मतम्। इयता एतद् वक्तुकामोऽस्मि यद् व्याकरणबहुलायां देववाण्यां संलापपद्धतिर्नावलम्बमर्हति।

मोडकमहोदयाः।

(१०) व्याकरणजटिलसंस्कृतभाषाविषये संवादपद्धतिरारम्भतो न स्थिरफलदायिनी स्यात्। छात्रास्तु केवलं सुलभप्रश्नानां ह्रस्वोत्तरदानेन स्वेषां श्रोतॄणां वा कौतुकं पूरयेयुः। परं परमार्थतो भाषाप्रभुत्वस्य कथा तु दूर एव। मातृभाषैव परमार्थतःसंवादपद्धत्याऽधीयते। द्वितीयादिभाषास्तु, भवन्तु ता आधुनिका वा जीर्णा वा,। संवादपद्धत्याऽधीयन्तेऽध्याप्यन्ते वेत्येतन्मतमयुक्तम्!

निजसुरेमहोदयाः।

(११) गीर्वाणभाषाध्ययनेन किम्फलेन भाव्यमिति प्रश्नस्योत्तरे भिन्नानि मतानि सन्त्येव। किन्तु देवभारत्यां यानि प्राचीनान्यर्वाचीनानि च पुस्तकान्युपलभ्यन्ते, तेषु ग्रन्थकारप्रतिपिपादयिषितार्थावगमरूपमेकं फलं सर्वैरपेक्ष्यते। एवं स्थिते प्रारम्भत एव सुरवाग्वाक्यानामर्थावगमप्रयत्नोऽवश्यकर्तव्यतामापतति।

संस्कृतभाषाया आलापेष्वप्रचलितत्वाद्व्याकरणादिकस्य दुर्बोधत्वात् सामान्यबुद्धिमतां छात्राणां साहजिकाद्भूरिश्रमवैमुख्यात् समयस्य त्रिविधविप्लवोपहतत्वादितरकारणवशाच्च देववागध्ययनं ह्रासं यातीत्येतन्नाश्चर्यावहम्। बालस्वभावमनुसृत्य यदि सुलभतमा सरणिराश्रीयेत तदैवासौ ह्रासः प्रतीप्येत।

पद्धतिविषयेऽप्येकमत्यं नास्ति। अपेक्षितफलवैविध्यात्पद्धतिवैविध्यमुद्भवति। किन्तु ग्रन्थकारविवक्षितस्य सम्यग्बोध एव चेदादिमहेतुत्वेन स्वीक्रियते तर्हि पद्धतिवैविध्यमल्पिष्ठं भविष्यति। ततश्च केचन सरलमार्गा दृष्टिपथमायास्यन्ति।

आलापेष्वप्रयुज्यमानानां भाषाणामध्यापनं प्रारम्भे संवादमयं भवितुं नार्हति। सुपरिचितवाक्यानां क्वचित्संवादेषूपयोगः क्रियेत, किन्तु प्राधान्यतः संवादपद्धतिर्बालानां सुगमा न भवति। सुबन्ततिङन्तादिषु यदा सम्यक्प्रवेशो भवति, तदैव संवादपद्धतिर्हिताय कल्पते। छात्रैर्ज्ञातपूर्वाणि रूपाणि प्रयुज्य

यावन्ति संवादवाक्यानि रच्यन्ते तावन्ति शालासु क्रमेण प्रवेशनीयानि। आरम्भे लघुसंवादाः, क्रमशश्च विपुलाः संवादा वर्गेषु प्रचारयितुं शक्यन्ते। संवादरचने ज्ञातपूर्वरूपाण्येव केन्द्रस्थानं भजेयुः। संवादपद्धतिपारिभाषिकार्थो मया नानुलक्ष्यते।

भवत्प्रदर्शिता पद्धतिः + ( सर्वसारग्राहिणी पद्धतिः~Eclectic-Method ) सुरुचिरास्ति। गीर्वाणवाण्यध्यापने पद्धतिपटुभिः शिक्षकैः सा पद्धतिरुपयुज्यते। भिन्नभिन्नानुभववशान्मतभेदैस्तु भाव्यमेव। तथापि ये ऋजुचेतसा छात्रलाभार्थमेव स्वमतमुपयोजयन्ति, तेषां प्रयासैरवन्ध्यैरेव भाव्यम्। आर्जवपुरस्सरमुपस्थापितानि भिन्नमतानि प्रगतये कल्पन्ते।

पद्धतिविषये त्रीणि तत्त्वानि सर्वत्रावश्यकानि। (१) अक्लान्तिपुरस्सरं ज्ञानलाभसिद्धिः (२) विस्मरणाभावः, (३) यथाप्रसङ्गं निर्दोष उपयोगो लब्धज्ञानस्य। एतत्त्रयं जगति पुण्यकृतो लभन्ते। यत्र यत्रैतत्त्रयं साध्यते तत्र तत्र—

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च॥
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

इति पुष्पदन्तोक्तिः सिद्धा भवत्यध्यापनेऽपि।

अत्र मदनुभवमेकं वक्ष्यामि। 'Saidapet Teachers College' संस्थायां ' First Form ' वर्गे आङ्ग्लभाषाध्यापनप्रसङ्गो ममोपस्थितः। तत्र ' Finish ' शब्दस्यार्थः शिक्षणीयोऽभूत्। मम तमिळ्भाषाया अज्ञानवशाच्छात्राणां च गुर्जरवाणीज्ञानाभावादनुवादस्यावकाशो नासीत्। अतः प्रकारान्तरमाश्रित्य मया कश्चिच्छात्रः स्वाभिधानं पृष्टः। स प्रतिबभाषे ' पार्थसारथिः इति '। तदनन्तरं मया ' Partha ' इति फलकोपरि लिखित्वोक्तं वाच्यतामिदम् ' इति। तेन वाचिते ' पार्थ ' शब्दे मयोक्तं ' I have

+ ' पद्धतितारतम्यम् ' इति [illegible] प्रदर्शिता। —सङ्ग्राहकः।

not finished your name ' तदनन्तरं 'Partha' शब्दे मया फलकोपरि 'Sara' इति सङ्कलितं छात्रान्तरेण वाचितं च। मयोक्तं I have not finished his name ' अनन्तरं 'thi' संकलय्य च्छात्रान्तरेण वाचयित्वा मया कथितं 'Now I have finished his name'। सर्वैश्छात्रैरर्थोऽवगतो न वेति निश्चेतुमन्यस्य च्छात्रस्य नामधेयं पृष्ट्वा खण्डशो लिखित्वा प्रश्नाः कृतास्तेन तैच्छात्रैरर्थो गृहीत इत्यहं ज्ञातवान्। पाठाध्यापनानन्तरं पाठगुणदोषविवेचनसमये(at the criticism meeting) कैश्चिदुक्तं, यद्यदि चित्रद्वयं( एकं चित्रं पूर्णं द्वितीयं चापूर्णम ) परस्परनिकटे कृत्वा 'finish' शब्दार्थोऽध्यापितः स्यात्तदा रासिकं स्यादध्यापनमिति। एषा टीका सुयोग्याऽऽसीदित्यहमपि तस्या अवितथत्वं स्वीचिकीर्षुरासम्। किन्तु तस्मिन्नेव क्षणे संस्थाध्यक्षमहशयाः ( Mr. Hall, Principal ) प्रोक्तवन्तः—" एषा टीका शिक्षणे प्रयोजितायाः परिपाट्या याथातथ्यमन्यथा कर्तुं न क्षमा। वर्गस्थानां छात्राणां नामाभिलेखनं जिज्ञासामजनयत्। सर्वेऽप्यवहिता आसन्। शब्दार्थं च ते न कदापि विस्मरिष्यन्ति। शब्दप्रयोगमपि यथाप्रसङ्गं करिष्यन्ति। अतश्चित्रद्वयस्याव्यावर्तनीयावश्यकता नासीत्। यद्यपि चित्राणामुपयोगः कर्तव्यो भवति, तथापि चित्राणि 'Choice of evils' सन्तीति न विस्मरणीयम्" इति। यद्यप्युपर्यवतारिता हॉल–महाशयोक्तिः सर्वेषां मनसि रुचिं नोत्पादयेत्, तथाप्येतत्तु सा सफलयति यद्भिन्नाः पद्धतयो नास्वीकारार्हाः।

चित्राणि याथातथ्येन वस्तुज्ञानं कारयितुं स्मरणशक्तिं च प्रोद्दीपयितुं विपुलं साहाय्यं कुर्वन्त्येव। किन्तु लघुशालासु ( कदाचिदध्यापनमहाविद्यालयेष्वपि ) यथोचितचित्राणि न सन्ति। प्रायः शिक्षकाः स्वयं तादृशानि चित्राणि रचयितुं न शक्नुवन्ति। तथापि यदि विना चित्रं शिक्ष्यवस्तु सम्यगध्याप्यते, तर्हि चित्राणामदर्शनं न दोषाय। चित्रमयाः पाठा मनोहराः, किन्तु चित्राणि अपरिहार्यवस्तूनीति केचिन्मन्यन्ते तदसमञ्जसमिति मे मतिः।

(क्रमशः)

# रक्षणीया सुरभारती

ले. दिवाकर शिवराम काजरेकर: बेळगांव.

---

अयि नानादिग्देशस्थिताः सुरभारतीकोविदाः मधुरवाणीप्रियपाठकाः! नाहं गीर्वाणवाग्वारिध्यवगाहनसमर्थः। तथापि प्राग्जन्मसंस्कारप्रभवः प्रेमैव प्रेरयति मां निबन्धलेखनाय। गोपितेयं सुरभारती प्रकल्पेत भारतस्यापि गोपनायेति मे मतिः। वैदिकधर्मीया आर्यानुयायिनो वयं आर्या इति संज्ञया अनयैव जीवाम इति बत को न ब्रूयात्? । सांप्रतं विनाऽनयाभारत्या भारते किं खल्वपरं तत्तेजो विद्यते, येनाद्य भारतं भारतनिवासिनश्च स्वेषां परेषां वा स्युस्समादरणीयाः। न खल्वन्यत् किंचिदपि शिष्टमादरास्पदमित्यत्र न कस्यचिदपि विवादः। आसीत् सुवर्णभूमिरिति भारतस्य सार्थं नाम, तदपि केवलं नामैव श्रूयते। अथ रत्नानां का कथा कथनीया। परं हृतावशेषं हरणायोग्यमिति कृत्वैवावशिष्टं विद्यतेऽस्मासु विद्याधनमेवाल्पम्। तत्रापि भवेम यदि वयं पराङ्मुखीभूता एव तदा किमपरमालम्बनं स्यात् आपदुदधिसंतरणाय भारतीयानाम्। कोऽत्र निरालम्बनः संतीर्णः संतरति संतरिष्यति वा भूतभवद्भविष्यत्सु कालेषु उदधिं आपदुदधिं वा। यदि चेयं भारती स्यादालम्बनं तदा अपराङ्मुखेन विधिना स्यादेव सर्वमस्मदायत्तम्। इयं हि साक्षात् सुरभि-चिन्तामणि-कल्पतरुतुल्या भारती किं किं न दद्यात् गोपिता गोप्तृभ्यः। किंबहुना? सुरभिचिन्तामणिकल्पतरुभ्योऽप्येषा गरीयसी, यतो विविधभोगदान एव समर्थास्ते न तु मोक्षदाने। इयं तु दद्याद्द्वयमपि नानाशास्त्रदर्शितैस्सत्पथैःस्वभक्तेभ्यः। न हि रत्नमेतादृशं किंचिदप्यस्मिन् भूतले दृष्टं श्रुतं वा येनेयं समेत्यङ्गुल्या दर्शनीयम्। उक्तमपि राज्ञा कविराजेन भर्तृहरिणा स्वकीये नीतिशतके—'क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषण'मिति। राज्ञः सतोऽपि न हि [illegible] समायातमेवंविधमनर्घ्यं रत्नं, तस्मादेव निर्गतेयमुक्तिस्तन्मुखादिति को न संभाषेत?।

उच्येत केनापि, 'किमनया मृतभाषये'ति तदपि तपति दिवाकरे कोऽयं घनान्धःकार इति अन्धस्य वचनवत् स्यात् विचारासहं वचनम् । 'सर्वे गुणाः काञ्चनमाश्रयन्ते' इत्येतयैव काञ्चनदृशा भणन्तु केचित् 'किमनया मृतभाषये'ति । परं दीयेत दृष्टमिदमत्र प्रमाणं नैषा मृतभाषेति साधकम् । यदखिलसंशोधकाग्रणीभिः पाश्चात्यैरपि मुक्तकण्ठैर्गीयते नैतादृशी भारतीति । केन नाम गुणज्ञेन कस्तूरिका मृत्तिकेत्युच्येत ?। यद्युच्येत तदा स कथं गुणज्ञो भवेत् । अपरं च यदाश्रयेण कविकुलगुरुकालिदासादयश्चिरायुषस्संजाताः तामेव मृतामिति को दैवशप्तो वदेत् । नूनं य एवं वदेत्, स तु ललाटंतपति भगवति मरीचिमालिन्येव मुखगण्डूषं कुर्यात् । भवतु । नैषा मृतभाषेति विवेक्तुं पर्याप्तेयं विवेकदिक् ।

तथैव पश्यत भारतरक्षणायापि कथं कल्पतैषा सरस्वतीति । 'शरीरमाद्यं खलु सर्व-साधनम्' इत्युक्त्वा निर्दिष्टं प्रथमादरणीयास्पदं शरीरारोग्यमपि दातुं समर्थेयं आयुर्वेदोपासनया । निरामयान् इहामुत्र च श्रेयस्साधने प्रवर्तमानान् पुरुषान् मनुस्मृत्यादिभिर्दर्शयेत् सत्पथान् । स्वे स्वे कर्मण्यभिरताश्च ते वार्तादिभिः साध्नुयेयुरर्थान् । अथ सधनाश्च ते औशनसादिभिः शास्त्रैः दिव्येनाप्रतिहतेन चक्षुषा आनयेयुर्नन्दनवनोपभोगानपि भूतले । तथैवोपनिषदुदधि-मन्थनेन च प्राप्नुयुर्मोक्षामृतमपि । एवं च ओजस्विनो भारता भारतरक्षणाय कल्पेरन् इतीयमुक्तिः पुनरुक्तिरेव स्यात् ।

सन्ति खलु सुबहून्यन्यानि साधनानि सुलभानि समर्थानि च आधुनिकानाम् पाश्चात्यानि इति मास्त्वस्या गौरवम् इत्यपि नैव सुविचारपरिणतं वचनं भवितुमर्हति । यतः सन्तु नाम त्रिविधपुरुषार्थसाधने समर्थानि सुलभान्यपराणि साधनानि परेषाम् । 'गुणेषु कः पक्षपातः' परं चरमपुरुषार्थे साध्ये तु इयमेव शरण्या सर्वेषां इत्यत्र को विवदेत ?। अपरं च सति स्वकरे को बत मन्दमतिः परकरेण भोक्तुमिच्छेत् ? इति प्रतिष्ठितमेवास्या गरीयस्त्वम् ।

अतः परं कथमस्या गोपनं भवेदित्येकैव चिन्ता। समाधानं तु राजाश्रयमन्तरा सम्यक्तया कर्तुं न कोपि प्रभवति। तत्तु साक्षादेवानुभूयत एवास्माभिः। यथा वयमद्य अकिंचना दीनाश्चाभवाम तथैवेयमपि अस्मदीया माता। पुत्रस्य दारिद्र्यं मातुरपि दुःखदमिति दृश्यत एव लोके। तत्र तु दैवदुर्विपाक एव वचनीयो भवेत्। परं दैवदुर्विपाक इति हताशेन नैव स्थातव्यं मनीषिणा। दरिद्रोऽहं भिक्षासाधन इति मत्वा स्वस्थान एव स्थितस्यालसस्य केवलं दैवनिष्ठस्य मुखे कुतोऽप्यागत्य नैव पक्वान्नं पतति इति आबालवृद्धानां आगोपालपण्डितानां सर्वेषामेव विदिततममिति कृत्वा नैव स्वतन्त्रतया कथनीयमिति भाति मे। दैवमपि न स्वतन्त्रम् इति निर्णीतमेव याज्ञवल्क्यादिभिर्मनीषिभिः—'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते' इत्यादिभिर्वचनैः। अतः सरलोऽयं पन्थाः स्वात्मोद्धारणे यत् पूर्वकर्ममार्जनसमर्थान्यपराणि सत्कर्माणि कर्तव्यानि। तथाच स्यादेव मुक्तता दैवदुर्विपाकात्। तदैव पराङ्मुखीभूता लक्ष्मीरपि स्यात्सम्मुखी। नामशेषीभूता गुरुत्वदप्यपि दृश्येत पुनर्भारते। पूर्ववत् सुवर्णभूमिरिति भूयोऽपि सार्थं नाम लभेतैषा भारतमाता। परं तदुपायस्तु सुरवन्दितायाः सुरभारत्यास्संरक्षणमेव। तदर्थं च तनुमनोधनानि समर्प्य प्रथमम् अस्माभिः प्रयतितव्यम् अस्याः संरक्षणार्थम्। रक्षितैषा प्रभवति अस्मत्संरक्षणे। सुसंरक्षिताश्च वयमपि भारतगोपने। भारतगोपनेन च भूयोऽपि लभेमहि राजाश्रयम्। राजाश्रयेण च कलिकालपंकादुद्धृता इयमपि सरस्वती दद्यादपराणां कालिदासादिप्रभृतीनां कविकुलगुरूणां पुनरप्यस्मिन् भारते जन्म। तदेदं स्यान्नन्दनवनं पूर्ववत्। तत्र च नन्दन्तु भारतवासिनः पुनरपि नन्दने।

हन्त बत कोयं कलिकालविलासः केयं? भारतवासिना मार्याणां नो गतिः?। एकदा ये सर्वासु कलासु अखिलासु विद्यासु व्यवहारेषु च सर्वेषां नेतारोऽवर्तन्त, त एवाद्य परमुखनिरीक्षकाः सञ्जाताः, धिगिमामापदम्। 'इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि' इत्युक्ति निर्दिष्टम् आर्याणां क्व तत्तेजः, क्व चेयं अस्मासु तत्तेज आसीन्नवेति संशयपङ्कमग्ना मतिः। अयि बान्धवाः!

मा शङ्कध्वं—'उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत' इति स्मरत इमां उपनिषदम् । भवेम पुनरपि सर्वेषां नेतारः अग्रण्यः ओजस्विनः सरस्वत्युपासनया । कुरुतावैव मङ्गलदिने मङ्गलमयीमिमां प्रतिज्ञां यत् करवाम अद्यारभ्य सरस्वत्युपासनामिति । अस्तु । ददातु स भगवान् अस्माकं एवमेव संततं भारत्याराधनं कर्तुम्मतिमित्याशास्य तदाशिषं, यथा—मत्युपक्रान्तं च यत्किंचित् विचारसोदरं वचनं तदेव गृण्हन्तु सादरं गुणिगुणग्राहिणः सदसद्विवेचने क्षीरनीरविवेकिनः राजहंसा इव स्थितास्सर्वे इति विज्ञाप्य विरमामि ।

---

## मधुरवाणी समभिनन्दनम्

कविः—श्रीकृष्णस्वामी अय्यंगार महाशय—बेंगळूर

---

मनोज्ञाभिप्रायप्रकटनकलाकौशलजुषाम्
प्रसिद्धानां नानाविषयसुखबोधाय सुधियाम् ।
सुराणां भारत्यां सरलसरणौ साधु लिखितैः
विराजन्ती लेखैर्भुवि मधुरवाणी विजयते ॥ १ ॥

अज्ञानान्धन्तमसभरिते पापकूपे निमग्नान्
संरुन्धे या भुवनमहितज्ञानदीपप्रदानात् ।
सर्वोत्कृष्टा रुचिरवचनालङ्कृता पत्रिकेयम्
सन्तोषाब्धौ बुधपरिषदं मज्जयन्ती विभाति ॥ २ ॥

रम्याकारा रसिकजनतामानसोल्लासदात्री
विद्यावारांनिधिभिरखिलैरादृताऽऽपेतदोषा ।
कारुण्येनाश्रितजनपरित्राणबद्धादरस्य
श्रीनाथस्यानवधि सुयशः प्राप्नुतां पत्रिकेयम् ॥३॥

रमणीयकथाकलापयुक्ता रमणीवोत्तमभूषणैरुपेता ।
रसिकस्य न कस्य पत्रिकेयं हृदयं मोदयते मनोज्ञरूपा ॥४॥

सरसकवितोद्यानक्रीडत्कवीश्वर कोकिला-
तिमधुरसुधाधारादर्पापहारिमृदुस्वरैः ।
मुदितहृदयास्संवृत्ताः स्मः प्रहृष्टतनूरुहाः
सुरवरगिरः प्रेयस्या नःस्वयं परिचारकाः ॥५॥

विनोदवाक्यावलिजातशोभा विशुद्धविज्ञानविशेषदात्री ॥
समस्तसम्मान्यगुणा चकास्ति प्रसिद्धमानोज्ञकपत्रिकेयम् ।६।

सुललितपदबन्धा वीतदोषानुषङ्गा
रुचिरवचनजाताराधिताशेषलोका ।
गुणगणबहुमान्या षष्ठवर्षान्तिकस्था
भवतु मधुरवाणी लोकमान्या प्रसिद्धा ॥ ७ ॥

ललितमधुरैर्नानालेखैर्मनोरमताङ्कता
शिशुपदमतीयायोत्कृष्टा विवेकिभिरादृता ।
कविभिरनघा विद्यावाद्भिः कलापरिचारकै-
र्जयति मधुरा वाणी सेयं सुसाधसमीहिता ॥ ८ ॥

जयतु मधुरवाणीनामिका लोकमान्या
प्रकटितगुणजाता मासिकी पत्रिकेयम् ।
जयतु विगतदोषा भारती देवतानाम्
जयतु मुदितचेताः पण्डितानां समाजः ॥ ९ ॥

करुणावरुणालयस्य विष्णो-
रुणाम्भोरुहलोचनस्य शीघ्रम् ।
दयया मधुरा मनोरमेयम्
सुरवाणी परिवर्धिता हि भूयात् ॥ १० ॥

नानानाटककारः संपादयिता परंसुभाषिण्याः ।
कविकुलमान्यः कृष्णस्वाम्यय्यङ्गार्य एवमाशास्ते ॥ ११ ॥

# संस्कृतभाषा राष्ट्रभाषात्वेन इष्टा उत अनिष्टा

ले० आर. व्ही. शेषाद्रि बी. ए. राजेंद्रम् ( त्रिचनापल्ली )

विदितमेव भवतां यन्न केवलं राजधान्यामेतस्यां न केवलं अत्र विविधराजधानीसमलङ्कृते भारतखण्डे सर्वत्र निखिले किल भूमण्डलेऽपि विधिविनिर्मिताः विविधा मर्त्यजाता वाङ्मय्या भारत्यैव स्वस्वाशयमाविष्कुर्वन्तीति । तत्र यथोचितं यथादेशसंप्रदायं व्यवह्रियमाणासु नैकविधासु प्राच्यप्रदीच्यादिभाषासु श्लाघ्यतमा नितरां प्राचीना बहुविधरसालङ्कारपरिपोषविजृम्भिता अतिरमणीया हृद्या निरवद्या वाणी का वा स्यात् । या हि पूर्वमस्मद्वंश्यैः सादरं परिपालिता ? यां च पूर्वं भूभृतः सभक्तिकं समपोषयन्, यस्यां च न केवलं शास्त्रेषु, न केवलमितिहासपुराणादिषु, अपि तु काव्येषु दृश्यश्रव्यभेदविभिन्नेषु, सर्वत्र बहुविधाः ग्रन्थाः विरचिताः ? या च पूर्वमासृष्टेः जगति कृत्स्नेऽपि सकलजनसाधारणी वाणी बभूव, । इति विचारमार्गेण वीक्ष्यते यदि, गैर्वाण्येव तादृशी वाणीति भारतवासिभिरन्यैरपि पाश्चात्यैर्विद्वन्मणिभिः प्रतिपादितं वरीवर्ति । तादृश्याः गैर्वाण्याः भूतपूर्वनिरवद्यवैशाल्यसमृद्धेर्यादृच्छिकैः बहुविधैरुपप्लवैर्जातशोषायाः दीनदीनां स्थितिमवलोकयतः कस्य मनो न दूयेत ? । सांप्रतं तत्र तत्र किंचित्किंचिद्दरीदृश्यमानायाः कण्ठगतजीवितायाः अस्याः गैर्वाण्यास्समुद्धरणे अखिलभारतभाषात्वापादने च सर्वैरपि सप्रयत्नैर्भाव्यम् । विशिष्येदानीं तत्रापि लोकोपकृतितत्परैः राजकीयैः अधिकारिभिस्समधिक्रियमाणे सति भारतदेशे तथाविधो यत्नस्सुकरः सफलश्च भवेदित्येवास्माकं मनीषा । भवत्वस्याः गैर्वाण्या अखिलभारतभाषात्वापादनं तथैव सङ्कल्प्येत यदि, तस्यास्सुकरता सुसाध्यता च भवेत् । कच्चिदस्ति तादृशी योग्यता चैतस्या गैर्वाण्याः । इयमखिलभारतभाषा भवितुमर्हति न वेति विचारयामः ॥

**संस्कृतभाषायाः दौर्भाग्यम्** ॥——अस्मद्देशः खलु खैस्तवाब्द २८ शतात्परं न कृपाणपाणिभिर्नापि प्रजारञ्जनैरपि तु बहुविधैः प्रलोभनैर्नैकवि-

धैर्वञ्चनैरन्यादृशैरनन्यसाधारणैः भिन्नमदप्रयोगैश्च समाक्रम्यत । क्रमेण चानिदंपूर्वासदृशान्यायसमाक्रमणानन्तरमाङ्ग्लाधिकारिणः शनैः शनैः अस्मद्देशमाक्रमितुं प्रावर्तन्त । अस्माकमविशेषेण मातृभूतां भूयोऽव्यवहारां गैर्वाणीं लोपयितुं प्रकृतीश्च स्वभाषाऽव्यवहृतिनिपुणाः परिकल्पयितुं च प्रायतन्त । क्रमेण च तदनुष्ठितैः उपायैस्तैर्भाषिताङ्ग्लभाषैव तत्प्रजाभिरपि भाषितव्यासीत् । भारतवासिनोऽपि क्रमेणाङ्ग्लभाषां पठित्वा तस्यामतिनिपुणा बभूवुः । तागूर प्रभृतयः केचिदाङ्ग्लभाषाधुरीणा अपि संवृत्ताः । अतस्तेषां स्वस्वभाषापठनेऽवकाशप्रयोजनयोः अभावेन ता अप्यनाद्रियन्ते तैः । आधुनिकाः केचन निपुणाः स्वेतरभाषाभिवृद्धिं तदात्वे एव भारतीयानां सर्वासामपि भाषाणां प्रायेण निर्वाणभूयिष्ठानां शोचनीयां गतिं प्रसमीक्ष्य तदभिवर्धयितुकामाः सर्वानस्मदीयान् खलु भारतीयान् ससंभ्रमं सोत्साहं प्रोत्साहयन्ति ।

अस्मद्देशे नैकविधा भाषास्सन्ति । तासु कतमा अखिलभारतभाषात्वेन परिगणनार्हेति विचारणीयमस्माभिः । देशे देशे एकैव भाषा स्वस्वदेशाभिवृद्धिकामैस्सर्वैरपि जानपदैः भाषणीया, यतस्तदात्वे एव प्रजाः परस्पराशयाविष्करणे प्रभविष्यन्ति । अद्य तु भारतीयभाषास्वन्यतमयाऽखिलभारतभाषया भवितव्यमिति जनास्सर्वात्मना समभिप्रयन्ति । घोषयन्ति च पदे पदे आत्मनाचिन्तितं समाचारपत्रिकासु गोष्ठीप्रसङ्गेषु च । तथाभिप्रियमाणासु भाषासु कतमा तादृशी भवितुमर्हतीति विचारमार्गेण वीक्षामहे ।

अस्मद्देशे पुनरुत्तरभागे हिन्दीमराठ्युरुदुवङ्गाळीत्यादयो भाषाश्च, तथैव दक्षिणभागे कर्णाटकेरलद्रमिडान्ध्रादयो भाषाश्च प्रजाभिः भाष्यन्ते । एकैका भाषापि तत्तत्स्थल एव प्रयुज्यते, यथा केरलभाषा केरलदेशे, द्रमिडभाषा चेन्नराजधान्यां, कर्णाटभाषा महीसूरराजधान्यां मराठीभाषा मराठदेशे चेति । यदि कश्चिद्दाक्षिणात्यः उत्तरभागं गच्छति, तद्देशभाषाया अज्ञाततया सर्वथा स्वाशयमाविष्कर्तुमशक्नुवन् महत्कष्टमनुभवति । तथैव दक्षिणदेशमापन्नः उत्तरदेशीयोऽपि । यदि काचनाखिलसाधारणी भाषा स्यात्तर्हि सर्वेषामविशेषेण स्वाशयाविष्कारस्सुकरः ।

अतस्तादृशभाषाव्यवस्थापने सर्वैरपि यत्न आस्थेयः। "यद्यप्यखिलभारत-भाषासु हिन्दीभाषैव बहुभिर्जनैर्भाष्यते"। भूयस्सु प्रदेशेषु व्यवह्रियमाणाया-स्तस्या एवाखिलभारतभाषार्हन्तीं राजकीयाधिकारिणः मन्वते स्म। तदर्थ-माङ्ग्लपाठशालासु हिन्दीवाण्याः प्रवेशं च कृतवन्तः, यतस्सा भाषाऽल्पायासेन सर्वैरप्यभ्यसितुं सुलभेति तेषां मनीषा। सर्वथा तन्न समीचीनं, यतस्त्रिविधा हिन्दीभाषास्सन्ति, पश्चिमदेशीया, मध्यमदेशीया, पूर्वदेशीया चेति। एक-देशोद्भवैर्भाषिता तस्या एकविधा देशान्तरीणैर्न ज्ञायते। अतस्तिसृषु का वा आदर्शभाषा भवितुं योग्येत्याक्षेपे समुज्जृम्भिते सति नूतना कापि हिन्दी कल्पनीयेत्युत्तरं लभ्यते।

अन्ये च केचिदेवमाक्षिपन्ति हिन्दी तथा नातिसुलभा भाषा भवति, यथा जनास्तां मन्यन्ते। सर्वमपि भाषापठनं व्याकरणसंस्कारमर्हति; यतस्तं विनाऽधीतापि साऽनधीतेवाकिञ्चित्करी स्यात्। हिन्दीव्याकरणं तु पारसीक संस्कृतव्याकरणमनुसृत्यैव कृतम्। तयोर्व्याकरणपठनमपि असुकरं, किमुत तदनुसृत्य कृतस्य हिन्दीव्याकरणस्य। तस्माद्धिन्दीभाषाऽतिसुपठेति निश्चित्य तदध्ययने यत्प्रयत्नः क्रियते जनैस्तदपि वृक्षाग्रफलप्राप्तौ वामनायितं भवति।

अपरे च केचिदेवमाक्षेपमुद्घाटयन्ति। अधिकारिणो हिन्दीमाप्रथम-कक्ष्यायास्तृतीयकक्ष्यापर्यन्तमेव माणवकैः अभ्यस्यनीयां वदन्ति। एवं तेषां माणवकानामतिबालानां नूतनभाषाग्रहणे पूर्णशक्त्यभावेन तत्पठनप्रयासो वृथा संपत्स्यते। किंच, न कापि भाषा द्वित्रैर्वर्षैस्तत्रापि कतिचिन्मासै-स्तत्रापि प्रतिवारं त्रिचतुराभिर्घण्टाभिरभ्यसितुं शक्या। अत एतावानपि प्रयत्नो बधिरकर्णकृतो जप इव भवति। अपिच, भौतिकभूगोलादिबहुशास्त्र-पठितॄणां तेषां बालानामतिरिक्तानुचिताहिन्दीपठनेन परीक्षाजयविषये महा-न्किल खेदः संपत्स्येत। तस्माद्धिन्दीभाषाया एवंविधाअध्ययनात्तदनध्ययन-मेव गरीयः। एवं विचित्रा किल जनानां प्रवृत्तिर्यन्निष्प्रयोजने कार्ये प्रव-र्तन्ते। अतस्संभवति बहुजनविरोधे हिन्दीभाषाया अखिलसाधारणभाषात्वा-पादनमसुकरमेव।

(क्रमशः)

# "देवानाम्प्रिय" विषये विचारः ।

ले० 'तटस्थः'

"देव शब्दो यथा मनुष्येतरदेवत्वजातौ; तथाऽन्यत्र मेघे, राजनि, विद्वन्मनुष्ये च योगरूढः"। अत्र प्रथमद्वयस्य तु समालोचना जातैव। नच ताभ्यामर्थाभ्यां कोपि सम्बन्धः। तेन विस्तरो व्यर्थः। अवशिष्टमस्ति विद्वन्मनुष्यपर्य्यायवाचकतासाधनम्; तदेतद् भवत्प्रतिज्ञामात्रम। "अनेकार्थकस्य देवपदस्य देवजातौ विद्वन्मनुष्ये च समा शक्तिः" 'इतश्च देवपदं विद्वन्मनुष्यवाचकम' इदमपि प्रतिज्ञामात्रमेव। नाऽत्र प्रमाणं किमपि दर्शितं श्रीमता।

अग्रे भाष्यवचनमुद्धृत्य भवता साध्यते यद् 'भाष्यकारमते देवतात्वजातिर्न पितृषु, कुतस्तरां मनुष्येषु,।' एतेन भवताऽस्माकीनैव वार्ता साधिता यद् देवजातिर्मनुष्यभिन्नयोनिविशेषः। अत एवोक्तम 'देवयोनिरन्यो/मनुष्ययोनिरन्यः।' शत ७।४।२।४०। परं तत्र यत् पितृणामैश्वर्य्यवत्तया देवतापदेनाभिधानं कृतम्, एतेन स्पष्टं यद् अत्रत्यो 'देवता' शब्दो न देवजातिवाचकः, किन्तु क्रियावाचकोऽतो मन्त्रस्तुत्योऽभीष्टः; यथा च तत्र उद्योते नागेशभट्टेनोक्तम। यो 'या तेन उच्यते सा देवता,' 'यत्काम ऋषिर्यस्यां देवतायामभिष्टुतायामार्थपत्यमात्मन इच्छन् स्तुतिं प्रयुङ्क्ते; तद्देवतः स मन्त्रो भवति' दैवत ७।१।२ इति निरुक्तानुसारं स्वामित्ववाचकः। तदैव तु 'देवदेवत्यम' इत्यपि प्रयोगो भाष्यकृता साधितः। अन्यथा पुनरुक्तिस्तत्राऽनिवार्य्या भवेत्। ततश्च पर्य्यायत्वात् तदीयो युगपत्प्रयोगो न भवेत्। अतो मन्त्रस्वामित्वमेवाऽर्थमभिप्रेत्य ऐश्वर्य्यार्थको यौगिको देवताशब्दो भाष्यकृता दर्शितः, नात्र कापि भवत्पक्षसिद्धिः।

'अतिथिदेवत्यम्' इति नैरुक्तप्रयोगस्यापि 'अतिथिर्देवतास्वामी, तस्मै इदम इत्यर्थो भवेत्। नाऽत्र 'देव' शब्दोऽतिथिपर्य्यायः नचाऽतिथिशब्दो विद्वत्पर्य्यायः, न च अतिथिशब्दो मनुष्यपर्य्यायः, न च अतिथेर्विद्व-

स्वमानिवार्य्यम् । तेन भावत्की 'देव' शब्दस्य विद्वन्मनुष्यार्थकल्पनापि स्वयमेवाऽपास्ता । अत एव 'मनुष्येऽतिथौ सम्भवद् देवतात्वं न विदुषि दुरुपपादम्' इति भवत्कथनं निरस्तमेव । देवदेवतापदे पर्यायौ'। भवेदेवम्; परं 'पितृदेवत्यम्, अतिथिदेवत्यम्' इत्यत्र न तथा । अन्यथा 'देवदेवत्यम्' अत्र द्वयोः पर्यायत्वात् युगत्प्रयोगो न स्यात् । एवमत्र स्वाम्यर्थ एव पर्य्यवसन्नः; न तु देवजातिकदेवशब्दस्य प्रयोगस्तत्र कथंचिद् भवेन्मुख्यतया इत्यस्मत्पक्षसिद्धिः

एवं चेद् अतिथिदेवत्यम्' इति प्रयोगे 'देवदेवत्यम् पितृदेवत्यम्' इत्यादिप्रयोगे च स्वामित्वार्थ एव देवताशब्दस्य, न विद्वदर्थ इति । ततो 'देवानां विदुषां प्रियो विद्वान्: इत्यत्र नानुपपत्तिलेशोपि' इति भवत्कथनं स्वयमेव निर्मूलं सिद्धं स्वयमुद्धृतभाष्यमततोपि । अथ च विदुषां प्रियो विद्वान् भवेदित्यत्रापि व्याप्तिर्नास्ति, अविद्वानपि प्रियो भवितुमर्हति । विद्वान् विदुषः किं सत्करिष्यति । अविद्वाँस्तु विद्वांसं सत्कर्त्तुमर्हति । ततः सत्कर्त्ताऽविद्वानपि विदुषः प्रियो भवेत् । ततो 'देवानांप्रियः' एतेन देवशब्दस्य विद्वन्मनुष्यार्थकरणं यत्र खण्डितम्; ततो विदुषां प्रियस्य अविदुषोपि सम्भवेन, ततः प्रशंसार्थनिष्कासनमपि अव्याप्तिमज्जातम् ।

यदि 'देवपदेन मूर्खाभिधानं योगमात्रेण सम्भवद् न रूढ्यनुगृहीतम्, तस्मात् कैयटाद्यभिमतमूर्खार्थे विद्वदर्थे च अन्तरं महदन्तरम्' इति, तर्हि देवपदेन विद्वन्मनुष्यार्थनिष्कासनमपि न रूढयनुगृहीतम्; अतस्तत्रापि देवजात्यर्थतोऽन्तरं महदन्तरम् ।

अग्रे श्रीमान् मया टिप्पण्यां दत्तं मन्त्रं सम्पूर्णं विलिख्य तमार्तीयत, + इदमवोचच्च यत् 'शत्रुहननाय पवमानः प्रार्थ्यते, दक्षश्चोच्यते.... लेशतोपि निन्दायामाख्यायमानायां प्रार्थ्यमानो नाभिप्रेतार्थं सम्पादयेत् । तन्नात्र गर्हासम्भावयितुं शक्या' इति । परं भवता ममाभिप्रायो नात्र बुद्धः । अत्र सोमकृते देवानां प्रियता उक्ता । मन्त्रेपि स्तुतिरेवाभिप्रेता, मन्त्रद्रष्टुरपि

× आर्तीयत् । नामधातोर्लङि ।

स्तुतिरभिप्रेता। अत्र अस्माभिरपि विसंवादो न प्रकटितः प्राक्तनलेखे। परं तत्रास्माभिर्वैयक्तिकमनुमानं निदर्शितं यत् सोमो देवानां प्रियो मन्येत स्म याज्ञिककाले। तर्हि सोमस्य जडतां लक्ष्यीकृत्य तादात्विकैर्जडान्तरस्य नामापि प्रसेधितं भवेद् 'देवानाम्प्रिय' इति। परमत्र अस्माभिरुत्तरपक्षता न कृता। तत्र असमासत्वात् तद्भिन्नार्थकतापि प्रदर्शिता। अतस्तत्र भवता यत् प्रोक्तं यत् 'समासाऽभावे प्रशंसाभिधानसमर्थानि पदानि समासे सति न शक्तिमुत्सृजन्ति' अत्रापि वयं नकारं न कुर्म्मः। परमलुक्समासादि विशेषे क्वचिद् भिन्नार्थकतापि सम्भवत्येव। यथा च दास्याः पुत्रः इति अलुक्समासे असमासतो विशेषो दृष्टः। स चाऽयं विशेषो यद्—अलुक्-समासेऽयमाक्रोशवाचकः; असमासे तु तत्त्ववचनत्वाद्नाऽऽक्रोशः।

यथा च ऐतरेयब्राह्मणे २।३।१ 'दास्याः पुत्रः' इति शब्दोऽलुक्-समासवान्, स च ऋषिभिः कवषकृते प्रयुक्तः। स कवषो वस्तुतो दास्याः (क्षुद्रायाः) पुत्रो नासीत्, किन्तु कितवत्वात् तन्निन्दनार्थम् ऋषिभिस्तत्कृते 'दास्याःपुत्रः' 'अब्राह्मणः' इति अधिक्षेपवाचकं पदद्वयं प्रयुक्तम्। यदि स वस्तुत एव शूद्रायाः पुत्रोऽत एव अब्राह्मणोऽभविष्यत्; तदा तस्य निन्दा नासीत्, तत्त्वविषयत्वात्। दीक्षितेन अच्सन्धौ 'नादिन्याक्रोशे पुत्रस्य' इति सूत्रोदाहरणे 'पुत्रादिनी त्वमसि पापे' इत्याक्रोशे उदाहृत्य—'आक्रोशे किम्' इत्यस्य प्रत्युदाहरणे प्रोक्तम् 'तत्त्वकथने द्विर्वचनं भवत्येव पुत्त्रादिनी सर्पिणी'। एतेन 'आक्रोशः' अतत्त्वचनं फलितम्। भवदीयः स्वाम्यपि आचष्टे—'गुणेषु दोषारोपणं, दोषेषु च गुणारोपणम् असूया अर्थाद् गुणेषु गुणारोपणं, दोषेषु च दोषारोपणं स्तुतिः' सत्यार्थ प्र० पृ० पू ९। एवं कवषकृते प्रयुक्तो 'दास्याःपुत्रः' इतिशब्दोऽपि अलुक्समासत्वात् तत्र निन्दा (अतत्त्वमात्र) वाचकः। अत एव तद्भाष्ये सायणेन प्रोक्तम् 'दास्याःपुत्र' इति **उक्तिरधिक्षेपार्था**।' एतेन सिद्धं यत् स वस्तुतः शूद्रायाः पुत्रो नासीत् किन्तु ऋषिभिरपशब्द इव प्रयुक्तस्तत्कृते। यथा च नागानन्दादौ नाटके विदूषको भ्रमरमपि 'दास्याःपुत्र' इति सम्बोधयति।

एवमैतरेयब्राह्मणस्य अमुष्मिन्नेव वाक्ये स्थितोऽब्राह्मणशब्दोऽपि तस्य ब्राह्मणजात्यभावप्रतिपादको न, किन्तु अधिक्षेपमात्रवाचकः। यथा किल २।२।६ सूत्रभाष्ये ब्राह्मणस्य निन्दनाय 'अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति' इति वाक्येऽब्राह्मणशब्दो निन्दामात्रवाचकः। अत एव तत्र प्रदीपे उक्तम् 'तपःश्रुतयोरभावाद् निन्दया अत्र 'अब्राह्मण' शब्दप्रयोगः। तत्र जातिमात्रेऽवयवे समुदायरूपारोपाद् ब्राह्मणशब्दप्रयोगः। नञा तु स्वाभाविकी तपः श्रुतनिवृत्तिर्द्योत्यते' इति। एवं तत्रापि निन्दया 'अब्राह्मण' शब्दप्रयोगः। ब्रह्म न जानातीति अब्राह्मणः—अर्थाद् 'अक्षैर्मा दीव्य' इति स्वऋषित्वे दृष्टंमन्त्रमपि न जानाति, यतस्तं नाऽनुकरोति, किन्तु अक्षैर्दीव्यति अत एव ब्रह्मणः—वेदमन्त्रस्य अज्ञत्वाद् अब्राह्मण इति पारिभाषिकशब्दः।

अस्तु अप्रकृतविस्तरेणाऽलम्। एवं च सिद्धं यद् अमुत्र 'दास्याः पुत्रः' इति अधिक्षेपाऽर्थः इत्यलुक्समासत्वाद् अर्थे वैशिष्ट्यम्। एवं 'देवानाम्प्रिये' पि अलुक्समासे अर्थवैशिष्ट्य् मूर्खतायाः। तद् यदि भाष्ये वार्त्तिके इदानीं साक्षान्न दृश्यते मूर्खप्रयोगः परं प्रायशस्तदर्थे एव प्रयोगात् तदनुमानं क्रियते। अत एव सति वैशिष्ट्ये 'नहि समासोऽसति बाधके पदानामर्थाभिधानसामर्थ्यमन्यथयति' इति भवद्वचनं प्रत्युक्तम्। यतोऽत्र बहुभिः कृतोऽस्य मूर्खताऽर्थविशेष एव बाधकतया मन्तव्यः स्यात्।

यदि भाष्यं वार्तिकं मूर्खपदहीनम्; परं बहूनां मूर्खार्थप्रतिपादने प्रवृत्तिः, तर्हि मूर्खाऽर्थताया अनुमानं तत्र कर्त्तुं शक्यम्) "मूर्खपदानुपलम्भस्तत्र बाधकः" एतदपि यत्किञ्चित्। कालक्रमात् पाठेषु न्यूनाधिकता यत्र तत्र दृश्यते एव। यदा च पर्य्याप्तं सुरक्षितेषु वेदेषु पाठभेदा न्यूनाधिकता वा दृश्यन्ते, तर्हिग्रन्थान्तरे तु किमु वक्तव्यम। मूर्खार्थे प्रयोगप्राचुरीं दृष्ट्वाऽनुमेयं भवति यत् तत्र मूर्खशब्दो मूले वृत्तौ वा आसीत्। परं कारणवशाच्च्युतस्ततः। "मूर्खार्थे प्रचुरप्रयोगमुपलभ्य केनचित् प्रथमं वार्तिके मूर्खपदं योजितम्" एतद् भवन्मतं निष्प्रप्राणकमेव। यदा खलु मूर्खशब्दाभिधायकताऽस्य प्राचीनकालात् समायाति; तदा तत्र का विप्रतिपत्तिः स्यात्?। —क्रमशः

# " महाराष्ट्रसंस्कृतविद्यार्थिपरिषद् "

पुण्यपत्तने वेदशास्त्रोत्तेजकसभायाः परीक्षाकाले 'महाराष्ट्र संस्कृत-विद्यार्थिपरिषदो' द्वितीयमधिवेशनं वे. पुरुषोतमशास्त्री रानडे महाभागाना-माध्यक्षेण निरवर्त्यत। परिषदः प्रारम्भः शनिवासरे एप्रिल मासस्य षड्विंश-दिने प्रातः सार्धसप्तवादनवेलायां समभवत्।

प्रथमं काव्यतीर्थ वा. वा. भागवतमहोदयैरध्यक्षाणां सूचनं कृतम्। तदनन्तरमध्यक्षमहाशयाः स्थानापन्नाः। तैः किंचित् प्रास्तविकं भाषणं कृतम्। तस्मिन् अस्याः परिषदः स्वरूपं दृष्ट्वा आनन्दः प्रदर्शितः। अनन्तरं संस्कृत-भाषाया आवश्यकता, तस्या ऐतिहासिकं सांस्कृतिकं च महत्त्वं, विद्यमाना शिक्षणपद्धतिः इत्येतद्विषयत्रयमधिकृत्य बहूनां विद्यार्थिनां गैर्वाण्यामेव चर्चा-त्मकानि भाषणानि समभवन् एकादशवादनपर्यन्तम्।

अपराण्हे पुनः सार्धत्रिवादनानन्तरं विषयनियामकसमिति सभाऽभूत्। तत्र सर्वेषामग्रे स्थापनीया ये प्रस्तावाः, तेषु विषयेषु विद्यार्थिनां भाषणान्य-भवन् चर्चास्वरूपाणि। प्रातः कालीनाध्यक्षाः रानडेमहाभागाः कार्यबाहुल्येन नागताः। तेन भागवतमहाभागैःस्तेषां स्थानं प्रथमं किंचित कालपर्यन्तं स्वीकृतमासीत्। पंचवादनानन्तरं प्रातः कालीनाध्यक्षा आगताः। एवंप्रकारेण परिषदः प्रथमदिनस्य कार्यक्रमोऽभूत्।

अन्येद्युः पुनारविवासरे सप्तविंशतमे दिने रानडे महाशयानामनागमेन श्री. रा. त्र्यम्बक बळवन्त अभ्यंकर महोदयैः बी. ए. इत्युपपदधारिभिः तेषां स्थानमलंकृतम्। अध्यक्षाणां प्रास्ताविकभाषणानन्तरं अग्रे प्रदर्शिताः प्रस्तावाः सर्वेषां संमता अभवन्।

प्रस्तावः प्रथमः–१ गतवर्षीयाधिवेशने संमतं परिषदः संघटनात्मकं ध्येयं तदेव अस्मिन् हायनेऽपि संघटनाया अपूर्णतया समतं, क्रियते तदनुसारेण गतवर्षीयैव घटना संमता।

सूचकः—पी. नरसिंहशास्त्री नेरकर

अनुमोदकः—भागवत कृष्णनाथ पिंपळे.

प्रस्तावो द्वितीयः—२ अद्याप्यनया परिषदा कापि आर्थिकी योजना न कृता तेनास्याः कार्यं व्यापकं नाभूत्। परिषदः प्रतिनिधिभ्यः साधारण-सभासद्भ्यश्च किमपि वार्षिकं द्रव्यग्रहणमावश्यकम्। किन्तु अस्मिन् हायने तस्याशक्यतया अग्रिमे हायनेऽस्यविचारः करणीयः। किंचास्मिन् हायनेऽपि परिषदःकार्यस्य साहाय्यकरणस्य प्रतिबन्धकत्वं न भूयात्। तदनुसारेण सर्वेऽपि महाभागा विज्ञाप्यन्ते यत् एतत् कार्यं येषां संमतं तैरात्मीयतया विचारः करणीयः, यावच्छक्यं साहाय्यं च करणीयम्।

सूचकः—शिराळकर सं. 'संहति' प्रा. पा. शाळा, वाई;
अनुमोदकः—गोपाळ विष्णु भडकमकरः

प्रस्तावस्तृतीयः (३) 'महाराष्ट्रसंस्कृतविद्यार्थिपरिषदः कार्यकारि-मण्डले विद्यमानमध्यक्षकार्यवाट्स्थानं महद्भारावहम्। तस्मिन्विद्यमानानां स्थानिकमंडलस्य नियमनमित्यादिबन्धनं मास्तु। अध्यक्षःकार्यवाट्च स्वातन्त्र्येण-नियोक्तव्यः। पाठशालायां कार्यकारी सभासच्च स्वतंत्रः कर्तव्यः। तस्मै च स्थानिकं कार्यं दातव्यम्। अध्यक्षः कार्यवाट् च कस्या अपि पाठशालाया भवतु, स तस्याः पाठशालायाः प्रतिनिधित्वेन न मन्तव्यः, किन्तु तौ द्वौ अपि महाराष्ट्रस्य प्रतिनिधित्वेन मन्तव्यौ।

सूचकः—वा. पु. आचार्यः
अनुमोदकः—दा. गो. जोशी,
सं. पा. शाला इंचलकरंजी.

प्रस्तावश्चतुर्थः (४) 'महाराष्ट्रसंस्कृतविद्यार्थिपरिषद उपक्रमेण यद्यपि संस्कृताध्यायिविद्यार्थिषु जागृतौ सत्यामपि संपूर्णसंस्कृतशिक्षणदृष्ट्या विद्यार्थिष्वेव मर्यादितमेतत्कार्यमतीव लघुतमम्। शिक्षणस्य सर्वथोन्नत्यर्थं विद्यार्थिभिः सहैव शिक्षकाणामितरेषां विदुषां च सहकार्यमावश्यकम्। अतः अस्याः परिषद एवमपेक्षा 'यत् अग्रिमे हायने भविष्यतोऽधिवेशनात् प्रारभ्य अस्याः स्वरूपं विद्यार्थिपरिषद् एतावेदेव न, किन्तु व्यापकं महाराष्ट्र-

संस्कृतशिक्षणपरिषद्' एवंरूपं कर्तव्यम । इयं च महाराष्ट्रीयाणां सं. विद्यार्थिनां, सं. शिक्षकाणां, सं. विदुषां सं. हितचिंतकानां च प्रातिनिधिकी कर्तव्या ।

सूचकः—वे. उ. तीर्थ गोविन्दशास्त्री पंढरपूरकरः
अनुमोदकः—वसंत रामकृष्ण जावडेकर,
सं. पा. शाला इंचलकरंजी आ कुल-पुणे.

प्रस्तावः पंचमः—(५) अग्रिमे हायने भविष्यन्त्यां म. सं. शिक्षण-परिषदि परिषदोऽन्तिमं ध्येयं घटनेत्यादि संमतं कर्तव्यम । तत्तु सर्वेषां बोधमानवश्यकम् । अतो विद्यार्थिमंडलस्याध्यक्षैः कार्यवाड्भिश्च घटना किंस्वरूपा, कार्यं किमित्यादीनां स्वरूपं विविच्याभिप्रायार्थं सर्वत्र प्रेषणीयम् ।

सूचकः—गंगाधर शंकर जोशी हमीदवाडकर.
सं. महाविद्यालय सांगली
अनुमोदकः—न. मा. जोशी. प्रा. पा. वाई

प्रस्तावः षष्ठः (६) प्रथमं तावत् अस्याः परिषदः कार्यस्य महाराष्ट्रे विद्यमानानां पाठशालानामुदन्तः संकलनीयः । गतसंवत्सरे पत्रकद्वारेणे-तत्पृष्टमासीत्, परन्तु, अद्यापि सर्वेषामुत्तराणि नागतानि । अतः सर्वाः पाठ-शाला विज्ञाप्यन्ते । तत् स्वोदन्तोऽवश्यं प्रेषणीय इति.

सूचकः – हर्डीकर शास्त्री ज. श. पाठ. कोल्हापूर
अनुमोदकः—मा. ग. जोशी, सं. पा. शा. इचलकरंजी

एतेषु षट्प्रस्तावेषु चतुर्थः प्रस्ताव एकविरुद्धबहुमतेन संमतः । इतरे सर्वेऽपि ऐकमत्येन संमता अभवन् ।

अस्मिन् हायने कार्यकारिमण्डलस्य विभागः अग्रे प्रदर्शितः

अध्यक्षः—त्र्यम्बक बळवंत अभ्यंकर बी. ए. पुणें.
कार्यवाहः—वा. ज. गोसावी. प्रा. पा. शाळा वाई

सभासदः—मा. ग. जोशी इचलकरंजी, गो. शं. शिराळकर वाई, गं. शं. जोशीहमविाडकर सांगली, पंढरपूरकरशास्त्री आ. कुल पुणें, पाठकः याज्ञवल्क्याश्रम, पुणें, परांजपे शं. पाठशाळा पुणें, वे. महेश्वरशास्त्री जोशी सं. कॉ. पुणे, द. र. बापट उ. शं. वि. सातारा, र. तु. जोशी जेठाभाई पंढरपूर, र. ग. हर्डीकर सं. पाठ. कोल्हापूर. एवंप्रकारेण सर्वस्मिन संजातेऽनन्तरं मीमांसाविद्वान् सुब्रह्मण्यशास्त्री पाटणकरमहोदयानां भाषणं गैर्वाण्यामभवत् । तस्मिन् प्रसंगे तैः विद्यार्थिभिः निःसंकोचतया व्यवहर्तव्यं गैर्वाण्यामेव वक्तव्यम् । तेनाभ्यासेन तु सर्वमपि सुकरं स्यादिति उपदेशः कृतः । अनन्तरमध्यक्षमहोदयैः समारोपः कृतः । ततः सर्वेषामपि उपकृतिभरान् प्रदर्श्य विसर्जितेयं परिषदिति शम् ।

—दा. गो. जोशी, कोवाडकर.

---

# बेळगांवनगरे प्रवृत्तप्रथम सं. सा. सम्मेलने

## परीक्षितनिबन्धपारितोषिकनिर्णयः

प्रथमप्रकाशिते कालावधौ प्राप्तेषु पंचचत्वारिंशन्निबन्धेषु द्वात्रिंशतां निबन्धानां पारितोषकप्रदानार्हता निर्धारिता परीक्षकसमित्या । तद्यथा अधो निर्दिश्यते ।

## बहुमानपूर्वकं सुवर्णपदकार्पणम्

मुम्बापुरीये एलफिस्टनमहाविद्यालये प्रधानशास्त्रिपदमलङ्कुर्वन्तः श्रीमन्तः सुप्रसिद्धाः पण्डिताः श्रीशिवरामशास्त्री शिन्त्रेमहाभागाः ( काव्यलक्षणम् निबन्धमुद्दिश्य ) १ सुप्रसिद्धाः पुण्यपत्तनाभिजनाः पं. गोविन्द कृष्ण मोडकमहाभागाः ( द्विकर्मकधातूनां प्रयोगः ) २ पुण्यपतनस्थ एस्. पी. कालेज संस्कृतप्राध्यापका **गीर्वाणवाग्व्यवहारवाचस्पतयो** विद्याभूषण श्री. **के. ना. वाटवे महाभागाः** ( भक्तेरसत्वं ) ३ इत्येवं त्रयो विद्वद्वराः सुप्रसिद्धाः सं. सा. स. प. समित्या बहुमानपुरस्सरं सौवर्णपदकदानेन सम्मानिताः । तथा १ व्याकरणस्थापकेत्यादिबिरुदालंकृताः श्रीरामेश्वर देवस्थानसंस्कृत-महाविद्यालये प्रधानव्याकरणाध्यापकाः मधुरास्थाः पं. के. एस. कृष्णमूर्ति-शास्त्रिणो महाभागाः ( बाणिकर्णामरणम् ) २ संस्कृतसाहित्यसुधाकराः पं. मलगीवेंकटरमणाचार्या बागलकोट नगरनिवासिनः ( संस्कृतभाषाया उत्कर्षः ) ३ ( सांगली सरकारी हायस्कूल ) पं. धर्माधिकारिदामोदरशास्त्रिणः ( संस्कृत भाषा राष्ट्रभाषा भवति नवा ) ४ हूलीबृहन्मठाध्यक्षाः पं. तर्कतीर्थनीलकंण्ठ-शिवाचार्याः ( संस्कृतभाषा राष्ट्रभाषात्वेन इष्टा उतानिष्टा ) ५ मालवण-टोपीवालाहायस्कूलशास्त्रिणः पं. वा. आ लाटकरमहाभागाः ( बलिदानादिपुस्त-कानि ) ६ श्री. सुमित्रासाहनी वालिकादर्शविद्यालय बेळगांव ( आपदि अपत्यानन्देनापि नन्दति माता ) ७ पं. जीबाजीदत्तात्रयसाधलेशास्त्रिणः शहापुर ( संस्कृतभाषामहत्वं इत्येतेषां महाभागानां बहुमानपुरस्सरं सम्मानना तल्लिखितनिबन्धान् सम्यक् परीक्ष्य सुवर्णपदकप्रदानेन समित्या कृता ।

गलगलीस्थ बालकविः पण्ढरीनाथशर्मा बागलकोटनगरस्थ वाणी-विलासविद्यालये न्यायवेदान्तविद्यामभ्यस्यन् सरसलेखनकलाकौशल्यमासादितवानिति ( मदीलघुकथाया गुरुकथा ) तथा इचलकरंजी संस्कृतपाठशालायां विद्यार्थी श्रीपाद लक्ष्मण आठलेकर महाभागः ( पद्मिनीकादम्बर्याः कश्चिदंशः ) भाषासौंदर्यमतिसरसमासादितवानितिच एताभ्यांविद्यार्थिभ्यां इतोऽपि पाटव विशेष मधिगन्तुं प्रोत्साहनायच सुवर्णपदके समर्पिते । इतरे च बहवो निबंधा अपि सरसाः इति तल्लेखकेभ्यः प्रशस्तिपत्रिकाः समर्प्य सम्मानितवती परीक्षक समितिः । तेषां नामानि । १ पं. माणकेश्वरशास्त्री गोकर्ण सातारा २ रंगास्वामि अयंगार कुंभकोणम् ३ शेषाद्रि बी. ए. राजेंद्र ४ टी. एस् राजगोपाळ भूतपुरी ५ दिगंबर महादेव कुलकर्णी, बी. ए. न्यू. इं. स्कूल सातारा ६ शंकर रामचंद्र कुलकर्णी सांगली, ७ दिवाकर शिवराम काजरेकर बेळगांव, ८ सदाशिवशास्त्री हुकेरी ९ बाळाचार्य मंगळवेढे हुबळी, १० गणपतशास्त्रीखरे गोकर्ण ११ सच्चिदानन्दशर्मान्यायशास्त्री बेळगांव, १२ ए. एस्. खाण्डेकर बेळगांव, १३ बालगोपाळ कल्लोळकर बेळगांव, १४ कल्याण पांडुरंगमिश्रीफ कल्याण, १५ कृ. बा. कुलकर्णी बेळगांव, १६ वामन बाळकृष्ण भागवत वांई प्रा. पा. शाळा १७ शिवरामभट बैंदूरकर १८ सिद्ध नागसु ब्रह्मण्यम् मधुरा, १९ लक्ष्मण वामन तेरेदेसाई बडोदे, २० रसवैद्यजी वामनाचार्य कोल्हापूर. इति.

---

## श्रीरामकुञ्ज क्षेत्रे अभिनन्दनसभा.

दक्षिणकर्णाटके श्रीरामकुञ्जक्षेत्रे विराजमाने साम्नायसंस्कृतविद्यालये अध्यापक श्रीकृष्णाचार्याणां वेदान्तशिरोमणीनां सम्मानना आयोध्यिकश्रीसंस्कृतकार्यालयेन **संस्कृतसाहित्यभूषणो** पाधिवितरणेन कृता इत्येतदभिनन्दनाय तद्विद्यालयप्रधानाध्यापकानां न्यायमहोपाध्यायसाहित्यशिरोमण्यादि-बिरूदालंकृतानां श्रीनिवासाचार्याणामाध्यक्ष्येण सभा सम्मिलिता । तस्यांच संस्थायाः तथा पंडितानां च गौरवपुरस्सर मभिनन्दनं कृतम् ।

# ॥ श्रीनिवास प्रसादनम् ॥

कविः-पं. श्रीकृष्णमूर्तिशास्त्री रामेश्वर देवस्थान कालेज मधुरा

पूर्वतोऽनुवृत्तम्

चण्डरोचिरन्ववायमण्डनं सुरद्रुहाम्
मण्डलानि कार्मुकेन खण्डयन्तमोजसा ।
अण्डजातनायकं च पुण्डरीकलोचनम्
कुण्डलप्रभामनोज्ञगण्डपालिमाश्रये ॥ १७० ॥

नक्रवक्त्रसंपतद्द्विपाधिपावनोद्यतम्
शुक्रदण्डधरं महेन्द्रनीलशैलविग्रहम् ।
शक्ररक्षिणं सदा, त्वकुक्षिभागजगत्तलम्
चक्रपाणिमाश्रये विरक्तहृद्भवेऽक्रमे ॥ १७१ ॥

वेदमूर्धसौधसीम्नि दीपकल्पमुज्ज्वलम्
खेदहारिणं नृणां क्रमेण पुण्यकर्मणाम् ।
मोदमानमर्थिनां प्रपूर्य कामनां भृशम्
यादवं भजेतमां तमालकोमलं हृदि ॥ १७२ ॥

सामजारिमागमावसानकानने चरम्
भीमभोगिभोगतल्पकल्पितात्मविग्रहम् ।
सीमहीनवैभवं भवात्मना चकासतम्
सोमसूर्यलोचनं नमामि वेङ्कटेश्वरम् ॥ १७३ ॥

सारसासनैकयोनिनाभिपद्ममेदुरम्
पारमद्भुतं परं भवांबुधिं तितीर्षताम् ।
श्रीरसज्ञमज्ञतां हरन्तमंघ्रिसेविनाम्
धीरमात्मवञ्चने [illegible] श्रये ॥ १७४ ॥

व्योमसाम्यमीयिवन्ननामयं शिशोर्दिश
प्रेमभाजनस्य मे, दयस्व दीनसन्ततौ ।
दामभिर्मनोहरामरद्रुमाद्यमादृशाम्
द्योमणीयमान ! हृत्तमोनिबर्हणेऽव माम् ॥ १७५ ॥

शङ्खचक्रशार्ङ्गगदासिसंस्फुरत्करांबुजम्
रिङ्खदूर्मिभृद्दयाब्धिलोचनान्तराञ्जितम् ।
* कंखमित्युदीर्यमाणमेकमादिकारणम्
तं खगेशयानमानमामि कामुकं श्रियः ॥ १७६ ॥

काण्डकर्तृचां चयैरनेकधाप्रपञ्चितम्
खाण्डवप्रदाहिसव्यसाचिनोऽनुयायिनम् ।
ताण्डवे स्ववक्षसि श्रियः प्रमोदिनं सदा
पाण्डवार्तिभञ्जने समुद्यतं हरिं वृणे ॥ १७७ ॥

यामि तान्तहृद्भवन्तमाश्रयं परं सताम्
मामितः परं परीक्ष्य मा वृथैव खेदय ।
कामितं प्रपूरयाभयं वितीर्य सत्वरम्
जामितांचतुर्भुज त्यज द्विजातिरक्षणे ॥ १७८ ॥

शास्त्रमार्गगामिनां गदाधराङ्घ्रिसारसम्
पात्रनारतं सतां पवित्रयज्जगत्त्रयम् ।
शात्रवान्सुपर्वणां वदुद्यदर्कदीधिति
स्तोत्रमर्हदुच्चकैः स्फुरदधामि मूर्धनि ॥ १७९ ॥

गाङ्गतुङ्गभङ्गसङ्ग पेशलाङ्घ्रिपङ्कजः
+ रुग्णरक्षणकर्मणे निबद्धकङ्कणस्स्वयम् ।
हीरहारमेदुरोरसि श्रियं धरन्हरिः
त्रायतां यतात्मतां वितीर्य मामपायतः ॥ १८० ॥ ( क्रमशः )

---

* कंब्रह्म खंब्रह्मेत्युपनिषत् । + रक्षेर्भावेनक् ॥

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्गलमासप्रथमसप्ताहे प्रकाश्यते ।

(२) अस्यां प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः, लघुकथा प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्या अग्रिमप्रदेयं मूल्यं मार्गव्ययसहितं सपादं रूपकद्वयम् । अंकस्यैकस्याणकचतुष्टयं मूल्यम् । द्वीपांतरवासिनां तु वार्षिकं मूल्यं पंचरूप्यात्मकम् । विना मूल्यमादर्शसंचिका न प्रदीयेत । तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृध्दये पञ्चरूपकाणां दातारः सहायकाः, दशरूपकदायिनः पोषकाः पञ्चविंशतिरूपकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्तः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्या नीरसा असुवाच्याक्षरा एकपार्श्व एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा विज्ञापनानि समालोचनापेक्षिणो ग्रन्थाः पत्रिकाश्चान्यादि सकलं **मधुरवाणी कार्यालय बेळगांव** नं १६९८ इति संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहक-संख्यालेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः

**प्राप्तिस्थानम् —**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press. Belgaum by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

Regd. No. B. 3664.

# प्रत्येक थेंब मेंदू शांत ठेवण्याचें काम बजावतो.




# शमाम ऑईल

## व्हिजिटेबल ब्रेन टॉनिक.

केसाची वाढ झपाट्यानें होऊन केस गळणें अकाली पांढरे होणें वगैरे विकार बंद होतात. सुगंधाचा ताजेपणा व गुणाचे बाबतींत कोणतेही तेल याची बरोबरी करूं शकणार नाहीं. मानसिक त्रासाची कामे करणाऱ्यांना हें तेल शांत व सुखदायी आहे. सतत १४ वर्षाचे अनुभवानें आयुर्वेदिक पद्धतीनें तयार करण्यांत आलें आहे.



## स्टार कंपनी बेळगांव.